THE

KASHI SANSKRIT SERIES

235

*****

# CATURVARGACINTĀMAṆI

OF

## ŚRĪ HEMĀDRI

### Volume III

PARIŚEṢAKHAṆḌA

**PART III**

## KĀLANIRṆAYA

*EDITED BY*

PAṆḌITA YAJÑEŚVARA SMṚTIRATNA

and

PAṆḌITA KĀMĀKHYĀNĀTHA TARKAVĀGĪŚA

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

P. O. Chaukhambha, P. Box No. 1139

Jadau Bhawan, K. 37/116, Gopal Mandir Lane

VARANASI-221001 ( INDIA )

|| श्रीः ||

काशी संस्कृत ग्रन्थमाला
२३५

# चतुर्वर्गचिन्तामणिः

श्रीहेमाद्रिविरचितः

तत्र

## परिशेषखण्डनाम्नः

### तृतीयखण्डस्य

तृतीयो भागः

## कालनिर्णयः

श्रीयज्ञेश्वरस्मृतिरत्नेन
श्रीकामाख्यानाथतर्कवागीशेन
च
परिशोधितः

चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० ११३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मूल्य : रु० २५००-०० संपूर्ण १-४ खण्ड, ७ भाग

रु० ४००-०० तृतीय खण्ड ( परिशिष्ट खण्ड, भाग ३, कालनिर्णय )



मूल रूप से आसियाटिक् सोसायिटि आफ वंगाल द्वारा प्रकाशित, १८९५

पुनर्मुद्रणम् १९८५

अन्य प्राप्तिस्थान

**चौखम्भा विश्वभारती**

**पोस्ट बाक्स नं० १०८४**

**चौक, ( चित्रा सिनेमा के सामने )**

**वाराणसी-२२१००१ ( भारत )**

**फोन : ६५४४४**

---

मुद्रक—श्रीगोकुलमुद्रणालय, गोपाल मन्दिर लेन, वाराणसी एवं

ग्लोब आफसेट प्रेस, नई दिल्ली

# विज्ञापनम्।

ग्रन्थोऽयं चतुर्व्वर्गचिन्तामणिर्नाम सुविख्यातकीर्त्तिना पण्डितकुलतिलकेन महामहोपाध्यायेन श्रीमता हेमाद्रिणा विरचितः। स किल दाक्षिणात्यजनपदे वात्सगोत्रीयात् कामदेवनामकाद्द्विजोत्तमादुदभूत्। वासुदेवः वामनदेवश्च क्रमेणास्य पितामहः प्रपितामह आसीत्। हेमाद्रिस्तु देवगिरिनगरीपतेः यादववंशावतंसस्य सुप्रथितनामधेयस्य महादेवभूभुजः सकलकरणाधिपतिपण्डित आसीत्। स राजा पक्षग्रहधरेन्दुमिते शककुपतिसंवत्सरे समुदितवान्। हेमाद्रिश्च तत्समकालिक एवासीत्।

चतुर्व्वर्गचिन्तामणिः व्रतखण्ड-दानखण्ड-तीर्थखण्ड-मोक्षखण्ड-परिशेषखण्डात्मकपञ्चावयवसम्पन्नः। तत्र व्रतखण्डं दानखण्डञ्च आसियाटिकसोसाइटीसमाजाध्यक्षमहोदयानामनुमत्या तत्रभवतां पण्डिताग्रगण्यानां भरतचन्द्रशिरोमणिमहोदयानां परिशोधनप्रयत्नेन च मुद्रितं। तत उक्तमहोदयानां परलोकावाप्तौ परिशेषखण्डान्तर्गतश्राद्धखण्डं कालखण्डञ्च उक्तसभाजाध्यक्षमहोदयानां अनुमत्या आवयोः परिशोधनप्रयत्नेन च मुद्रितं। परिशोधने त्रीणि आदर्शपुस्तकानि सहायभूतानि आसन्। तेषां द्वयं क-खचिह्नितं वाराणसीस्थानाल्लब्धं अपरञ्च कलिकातासंस्कृतविद्यामन्दिरपुस्तकालयादधिगतं। त्रीण्येव पुस्तकानि अन्तरान्तरा अपरिशुद्धानि पूर्व्वापरसङ्गतिरहितानि च अतो बहुषु स्थानेषु स्मार्त्त-शूलपाणि-मन्वादिस्मृतिनिबन्धानां साहाय्यमवलम्बितं तथापि—

महारण्यच्छेदात् परमपि कियच्छिष्टमपरं
अतश्छेत्तुर्दोषो न हि भवति भाव्ये हि विषये।
वनन्यायादत्र क्वचिदपि भवेद्दुष्टमपरं
वचः क्षम्यं याचे विनतिततिपूर्व्वं हि कृतिन इति॥

अनन्तरं परिशेषखण्डान्तर्गतप्रायश्चित्तखण्डस्य मुद्रणं भविष्यति, सम्भाव्यते एतन्मुद्रणं महात्मनामुपकाराय कल्प्स्यते इत्यलं पल्लवितेन।

श्रीयज्ञेश्वरशर्म्मणः—

श्रीकामाख्यानाथशर्म्मणः—

# सूचीपत्रम् ।

( अ )



( आ )

## ( उ )



## ( ए )



## ( क )

## ( ग )



## ( च )



## ( ज )

## ( त )



## ( द )



## ( न )

## ( प )

( ब )

## ( भ )



## ( म )



## ( य )



## ( र )

## ( व )



## ( श )

---

# पुराणनामानि ।

## अ ।



## आ ।



## क ।



## ग ।



## द ।

## न।



## प।

## ब ।



## भ ।

## म ।



## र ।

## ल ।



## व ।

## श ।

शारदापुराणम् २०३ । ५ । २०३ । १३ । २२३ । २० । २३८ । ३ । २८५ । ६,

शिवपुराणम् ६५८ । २,—

शिवरहस्यपुराणम् ६७ । १५, ११७ । १४, ११८ । ३, २०६ । १६ । ३०६ । १६,

## स ।

सौरपुराणम् ४४७ । १८, ५२६ । ३, ५४४ । ११, ६४४ । १२, ७२४ । १६,

स्कान्दपुराणम् ६ । ५, ७३ । ११, ७५ । १५, ७६ । १६, ७६ । ३, ८० । ७, ८१ । ६, २२, ८२ । १२, ८३ । १६, ८४ । २, १६, ८५ । २, ५, ८८ । ६, ६० । २, ६१ । १५, ६७ । २०, १०४ । ८, १०६ । १४, १०७ । ४, २०, ११२ । ७, ११३ । १४, ११८ । ६, १२० । ४, १३० । १, १३३ । १ । १६, १४१ । ११, १४३ । ११, १४७ । १६, १५० । ८, २२, १५१ । १३, १५३ । ८, १५५ । ११, १६२ । १५, १७६ । १३, १८० । २१, १८१ । १६, १८५ । ६, १६१ । ६, १६२ । २२, १६६ । ८, २१, १६८ । ७, २०३ । २३, २०८ । ६, २१३ । १०, २१८ । २२, २१६ । ३, २२४ । ६, २२५ । ५, २३१ । १४, २३४ । ४, २३५ । १४, २३६ । १, ४, २३७ । १५, २३६ । १६, २४० । ३, २४१ । ७, २५० । १६, २६५ । १३, २६६ । २१, २८० । १७, २८१ । १६, २८२ । ११, २८५ । १३, २८६ । १६, २८७ । १६, २६० । १३, २६७ । १६, २६८ । ६, ३०६ । १, ३०६ । १६, ३२७ । १७, ३८१ । ३, ३६१ । १४, ४१५ । १३, ४२२ । ५, ४२६ । ४, ४३६ । ३, ४५१ । १, ५०४ । १६, ५२१ । ४, ५४४ । ४, ५६६ । १४, ५७१ । १६, ५७४ । ७, ५८६ । १६, ६२२ । ७, ६३८ । १, ६३६ । ४, ६४० । १२, ६४५ । ३, ६४८ । २, ६४६ । २, ६५६ । २, ६७८ । ४,

# ऋषिनामानि ।

## अ ।



## आ ।



## उ ।



## ऋ ।



## क ।

## ग ।

## ज ।



## त ।



## द ।



## न ।

## प।

## ब ।

भ ।



म ।

## य ।

## श ।

## स ।

## ह।

## स्मृतिग्रन्थनामानि।

### आ।



### क।



### ख।



### ग।



### च।



### छ।



### त।



### द।

प ।



ब ।



भ ।



म ।



य ।



ल ।



श ।

## ष ।



## स ।

# संग्रहकारनामानि।

## ज्योतिःशास्त्रनामानि ।



---

ॐ श्रीगणेशाय नमः ।

## चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये

संवत्सरायण-मासविशेषाणां कार्य्यविशेषोपयोगनिरूपणम् ।

## प्रथमोऽध्यायः ।

कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति
क्षोदीयस्यपि कर्मणि प्रभवितुं ब्रह्मापि जिह्मायते ।
जाते तच्चरणप्रणामसुलभे सौभाग्यभाग्योदये
रङ्कस्याङ्कमनङ्कुशा निविशते देवेन्द्रलक्ष्मीरपि ॥ १ ॥

शश्वत्पुण्यहिरण्यगर्भरसनासिंहासनाध्यासिनी
सेयं वागधिदेवता वितरतु श्रेयांसि भूयांसि वः ।
यत्पादामलकोमलाङ्गुलिनखज्योत्स्नाभिरुद्वेलितः
शब्दब्रह्मसुधाम्बुधिर्बुधमनस्युच्छृङ्खलं खेलति ॥ २ ॥

नमस्तस्मै विश्वोदय-विलय-रक्षाप्रकृतये
शिवाय क्लेशौघच्छिदुरपदपद्मप्रणतये ।
अमन्दस्वच्छन्दप्रथितपृथुलीलातनुभृते
त्रिवेदीवाचामप्यपथनिजतत्त्वस्थितिकृते ॥ ३ ॥

रागः कृष्ण नवस्तव श्रुतिरियं चेतश्चमत्कारिणी
मुग्धे वेत्थ यथा मयाद्य भरते वैदग्ध्यमाविष्कृतम् ।
जानीते दयितेव सा शुभरते यद्यद्विधत्ते भवा-
नित्युक्तो मधुभिन्निरुत्तरमुखः स्मियन् प्रियां पातु वः ॥ ४ ॥
ते देवस्य गभस्तयो दिनपतेरापन्नखेदच्छिदो-
निष्कृन्तन्तु कृतान्तपत्तनपथप्रस्थानदौस्थ्यानि वः ।
यैः सौवर्णमिवाखिलं करुणया निर्म्मातुमभ्युद्यतैः
कीर्णस्वर्णपरागरागघटितं दिक्चक्रमालक्ष्यते ॥ ५ ॥
राजा राजीवचक्षुर्विजयति जगति स्फीतशीतांशुवंश-
प्रादुर्भूतः क्षितीशः क्षितिपतितिलकः सिंघणः सिंहशक्तिः ।
तत्पुत्रो जैत्रपालः समभवदवनीमण्डलाखण्डलश्री-
रस्माद्विस्मापकानां समजनि यशसां भाजनं कृष्णभूपः ॥ ६ ॥
अस्ति प्रक्षमाभृद्भटमुकुटतटप्रांशुरत्नांशुदण्ड-
श्रेणीवेणीविराजत्पदयुगलगलद्गर्वनिर्वैरवीरः ।
तादृग्भिःसीमसीमाद्भुतचरितशतारम्भदम्भाद्दशाशा-
भित्तिन्यस्तप्रशस्तिस्तदनुजतनुजः श्रीमहादेवभूपः ॥ ७ ॥
आ कैलासाद्विलासालसगणतरुणीगीतगौरीशकीर्त्तेः
आ च प्रेङ्खोलपाथोनिधिजललहरीखेदवेलात्सुवेलात् ।
आ पूर्वस्मात्परस्मादपि धरणिभृतः कम्पमाना यदीयाम्
आज्ञां राज्ञां अधीशाः करमुकुलमिलन्मौलयः पालयन्ति ॥ ८ ॥
संग्रामेष्वधमर्णतामुपगता वीराः परक्ष्मोटयः
सेवा-प्रीत्युपपादनेन विविधानाधीन्निरस्य क्षणात् ।

अस्मादाददते निरत्ययसुखं तत्रैतदीयं यशो-
दिक्पालानिव याचितां गमयितुं दिङ्मण्डलीमञ्चति ॥९॥
हेलासादितलक्षमार्गणगणं श्रुत्वैतदीयं गुणं
येषां श्रेणिरनुस्मरन्त्यहरहस्तुष्टावदानाद्भुतम् ।
तेषामेव महाहवेषु मिलतां प्रत्यर्थिनामर्थिना-
मप्यासाद्य भुजं व्रजन्ति विलयं सैन्यानि दैन्यानि च ॥१०॥
अस्योच्चैर्भीमभूमीरुहगहनगुहागर्त्तगर्जन्मृगेन्द्र-
त्रासव्यासप्रसङ्गोच्चलनकुलकुलव्याकुलव्यालमालाम् ।
वारं वारं स्मृतैतद्भुजभुजगयुगैः स्फीतभीतज्वरौघां
मूर्च्छामृच्छन्ति हन्त क्षितिधरधरणीं लङ्घयन्तोद्विषन्तः ॥११॥

अनेन चिन्तामणिकामधेनु-
कल्पद्रुमानर्थिजनाय दत्तान् ।
विलोक्य शङ्के किममुष्य सर्व्वं
गीर्वाणनाथोऽपि करप्रदोऽभूत् ॥१२॥

तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः ।
निजोदारतया यश्च सर्व्वश्रीकरणप्रभुः ॥१३॥

तस्मादकुत्सितचरित्रपवित्रकीर्त्ते-
र्वंशे हिमांशुविशदद्युतिराविरासीत् ।
लीलावतारमकरोदिह वासुदेव
स्तस्माद्द्विजातिरुदजृम्भत कामदेवः ॥१४॥
हेमाद्रिरित्यखिलभूतलगीतकीर्त्ति
स्तस्याथ सूनुरजनिष्ट वरिष्ठमूर्त्तिः ।

नाम्ना समोऽपि विजितस्वरितेन येन
श्लाघामुपैति नहि काञ्चन काञ्चनाद्रिः ॥१५॥
तस्य श्रीकरणेशस्य कापि लेखनचातुरी।
यशःप्रशस्तिभिस्तूर्णं येन दिग्भित्तयो भृताः ॥१६॥
लिपिं विधात्रा लिखितां जनस्य
भाले विभूत्या परिमृज्य दुष्टाम्।
कल्याणिनीमेष लिखत्यथैनाम्
चित्रं प्रमाणीकुरुते विधिश्च ॥१७॥
सञ्चिन्त्य सञ्चिन्त्य तदेतदीयं
धत्ते मनोविस्मयमस्मदीयम्।
प्रागजन्मविद्यास्मरणक्षमोऽयम्
चणेन यद्विस्मृतिमेति दत्त्वा ॥१८॥
मन्ये तत्कृतदानवारिलहरीपूर्णायमानोऽम्बुधिः
कल्पान्तेऽपि न शोषदोषविषमां धत्ते कदाचिद्दशाम्।
किञ्चैवं जलधिस्थितिप्रतिभुवं निश्चित्य दैत्यारिणा
निश्चिन्तेन भुजङ्गपुङ्गवतनूतल्पेषु संसुप्यते ॥ १९ ॥
चित्रं तत्कृतदानवृष्टिपयसस्तत्त्वस्य किं ब्रूमहे
यस्मिन्नन्यवदान्यकीर्त्तिरतुला धत्ते तृणश्रेणिताम्
यद्भूमौ पतितं ग्रसिष्णु जनतापङ्कानि यच्चार्थिनाम्
न्यस्तं हस्ततलेषु भालफलके पापां लिपिं लुम्पति ॥२०॥
तत्तर्पितो देवगणः स नून-
मरोचको चन्द्रमसः सुधायाः।

चयन्तु चन्द्रस्य तदीयकीर्त्ति-
स्पर्द्धासमृद्धानि फलन्त्यघानि ॥२१॥

शूराणामवधिर्निधिश्च यशसामेकाश्रयः सम्पदाम्
दातॄणां प्रथमः कलाकुलगृहं वैदग्ध्यभाजां गुरुः।
धौरेयश्च विपश्चितां सुकृतिनामद्वैतवादास्पदम्
नैवासीन्न च वर्त्तते न भविता हेमाद्रिसूरेः परः ॥ २२ ॥

विभर्त्ति नूनं द्विजवेषमेष
स एव हेमाद्रिरिति प्रतीतः।
उदारसन्तानवतो यदस्य
कल्पद्रुमं दक्षिणबाहुमाहुः ॥२३॥

अथामुना धर्म्मकथादरिद्रम्
त्रैलोक्यमालोक्य कलेर्बलेन।
तस्योपकारे दधतानुचिन्ताम्
चिन्तामणिः प्रादुरकारि चारु ॥२४॥

तत्र च।

खण्डैश्चतुर्भिर्व्रत-दान-तीर्थ-
मोक्षाभिधैर्वर्गचतुष्कमुक्ता।
विरच्यते तत्परिशिष्टवस्तु-
व्यावर्णनार्थं परिशेषखण्डम् ॥ २५॥

तत्रादौ देवताकाण्डं ततः कालविनिर्णयः।
विपाकः कर्मणां पश्चाल्लक्षणानां समुच्चयः।
महाप्रकरणानीह चत्वार्य्येतान्यनुक्रमात् ॥२६॥

तत्रोक्तव्रत-दानादिकर्मजातोपयोगिनम् ।
कुरुते करणाध्यक्षो हेमाद्रिः कालनिर्णयम् ॥२७॥

तत्र कालस्वरूपं कूर्मपुराणे दर्शितम् ।

अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः ।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः ॥
ब्रह्माणो बहवोरुद्रा ह्यन्ये नारायणादयः ।
एको हि भगवानीशः कालः कविरिति स्मृतः ॥
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः ।
ब्रह्म-नारायणेशानां त्रयाणां प्राकृतोलयः ॥
प्रोच्यते कालयोगेन पुनरेव च सम्भवः ।
परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः ।
तस्मात् कालात्मकं विश्वं स एव परमेश्वरः ॥

विष्णुधर्मोत्तरे ।

अनादिनिधनः कालोरुद्रः सङ्कर्षणः स्मृतः ।
कलनात् सर्वभूतानां स कालः परिकीर्त्तितः ॥
अनादिनिधनत्वेन स महान् परमेश्वरः ।
निमेषादपि सूक्ष्मत्वात् सूक्ष्मात्सूक्ष्मतरोह्यति ॥
तस्य सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः ।
दुर्व्विभाव्या महाभाग योगिनामपि सूक्ष्मता ॥
पद्मपत्रसहस्रन्तु सूच्या वै भिद्यते यदा ।
समकालन्तु तद्भिन्नमबुधो मन्यते जनः ।
कालक्रमेण तद्भिन्नं सा तस्य द्विज सूक्ष्मता ॥

एवंविधस्यानादिनिधनस्यापि सूक्ष्मस्य यद्यप्यपरिच्छिन्नता तथाप्याद्यन्तवतीभिः सूर्य्यादिग्रहक्रियाभिः परिच्छिन्नतोपपद्यते तासां क्रियाणां सन्तानस्य वीजाङ्कुरसन्तानवदनाद्यनन्तत्वादनादिनिधनस्यापि कालस्य परिच्छेदः सम्भवति ।

तथाच विष्णुधर्मोत्तरे ।

तस्य सूक्ष्मातिसूक्ष्मस्य तथापि महतो द्विजाः ।
मानसञ्ज्ञा बुधैर्ज्ञेया ग्रहगत्यनुसारतः ॥

तथास्मदादिप्रत्यक्षनिमेषादिक्रियाद्वारेण परिच्छेदः कालस्य तत्रैवाभिहितः ।

लघ्वक्षरसमा मात्रा निमेषः परिकीर्त्तितः ।
अतः सूक्ष्मतरः कालोनोपलभ्योभृगूत्तम ॥
नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः ।
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणोदशत्रुटिः स्मृतः ॥
त्रिनाड़िकास्तु षट्प्राणास्तत्षष्ट्या नाड़िकाः स्मृताः ।
अहोरात्रन्तु तत्षष्ट्या नित्यमेव प्रकीर्त्तितम् ॥
त्रिंशन्मुहूर्त्तास्तु तथा अहोरात्रेण कीर्त्तिताः ।
तेऽत्र पञ्चदश प्रोक्ता राम नित्यं दिवाचराः ॥
उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः ।
तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज ॥
दिवसस्य यथा राम वृद्धिं समधिगच्छति ।
तदाश्रितमुहूर्त्तानां तथा वृद्धिः प्रकीर्त्तिता ॥
दिनवृद्धिर्यथा राम दोषाहानिस्तथा तथा ।

तदाश्रितमुहूर्त्तानां हानिर्ज्ञेया तथा तथा ॥
दक्षिणाञ्च यदा काष्ठां क्रमादाक्रमते रविः ।
दिवसस्य तथा हानिर्ज्ञातव्या तावदेव तु ॥
क्षीयन्ते तस्य हानौ तु तन्मुहूर्त्तास्तथैव च
रात्र्याश्रिताश्च वर्द्धन्ते रात्रिवृद्धिस्तथा तथा
यदा मेषं सहस्रांशुस्तुलाञ्चैव प्रपद्यते ।
समरात्रिन्दिवं कालो विषुवच्छब्दवाचकः ॥

एवञ्च निमेषादिक्रियाकालद्वारेणावच्छिन्ना या सूर्य्यक्रिया तादृश्यौ द्वे क्रिये यस्याः क्रियायाः अवयवौ तत्क्रियया अवच्छिन्नः कालस्त्रुटिरिति व्यवहारस्य विषयो भवति। एवमन्येऽपि प्राण-विनाड़िकादयो व्यवहारा ज्ञेयाः, एवं त्र्याद्यवयवद्वारेणाहोरात्रं निष्पद्यते। तच्च त्रिविधं दर्शितं ब्रह्मसिद्धान्ते ।

सावनं स्यादहोरात्रमुदयादोदयाद्रवेः ।
रवेस्त्रिंशस्तु राश्यंशस्तिथिसम्भोगमैन्दवम् ॥

विष्णुधर्मोत्तरे त्वहोरात्रञ्च चतुर्धा दर्शितम् ।

तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः ।
अहोरात्रेण चैकेन सावनोदिवसः स्मृतः ॥
आदित्यभागभोगेन सौरोदिवस उच्यते ।
चन्द्रनक्षत्रभोगेन नाक्षत्रोदिवसः स्मृतः ॥

तिथिभागयोर्लक्षणं तत्रैव दर्शितम् ।

चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् ।
तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य भार्गव ॥

भगणेन समग्रेण ज्ञेया द्वादश राशयः ।
त्रिंशांशश्च तदा राशेर्भाग इत्यभिधीयते ॥
आदित्याद्विप्रकृष्टन्तु भागं द्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥

स्कन्दपुराणे प्रभासखण्डेऽपि ।

अमाषोड़शभागेन[१] देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोड़शैव वरानने ॥

एवं मासोऽपि पितामहेन त्रिविधो दर्शितः ।

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिविचिह्नः सौरोऽपि निगद्यते तज्ज्ञैः ॥

'दर्शादिति ल्यब्लोपे पञ्चमी दर्शात्परतः शुक्लप्रतिपदमारभ्य अमावास्यान्त इत्यर्थः ।

तथाच ब्रह्मसिद्धान्तेऽभिहितम् ।

चन्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्तावत्कालं सभास्करः ॥

ज्योतिःसिद्धान्ते तु मासश्चतुर्विधो दर्शितः ।

प्रथमः सावनो मासो द्वितीयश्चान्द्रउच्यते ।
नाक्षत्रस्तु तृतीयः स्यात्सौरोमासश्चतुर्थकः[२] ॥

---

(१) अमाषोड़शभेदेनेति ख० ।
(२) चतुर्विध इति ख० ।

विष्णुधर्मोत्तरेऽपि मासस्य चातुर्विध्यमावेदितम्।

चन्द्रमाः पौर्णमास्यन्ते भास्करादतिरिच्यते।
राशिषट्कं तथा राम मासार्द्धेन न संशयः॥
भागद्वादशकेनैव तिथ्यां तिथ्यां क्रमेण तु।
चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते॥
सन्निकर्षादथारभ्य सन्निकर्षादथापरम्।
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते॥
सावने तु तथा मासि त्रिंशत् सूर्य्योदयाः स्मृताः।
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः।
सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते॥

चान्द्रस्तु देशव्यवस्थया त्रिकाण्डमण्डनेन निबन्धकृता द्विधा दर्शितः। चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा।

कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन।
येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे॥

तथा च तैत्तिरीयके श्रूयते।

अमावास्यया मासान् सम्पाद्याहरुत्सृजन्त्यमावास्यया हि मासान् सम्पत्स्यन्ति पौर्णमास्यया मासान् सम्पाद्याहरुत्सृजन्ति पौर्णमास्यया हि मासान् सम्पत्स्यन्तीति।

तथा पौर्णमासादक्षिणन्यस्मिन्महावार्त्तिके पूर्णमासोऽस्मिन्निति शब्दविद्भिरुक्तत्वात्। अश्वयुक् कृष्णपक्षे च श्राद्धं कार्य्यं दिने दिने। इति लिङ्गदर्शनाच्च।

अतएव द्विविधचान्द्रमासग्रहार्थं "यस्मिन्मासे दिने यस्मिन् विप-

त्तिरुपजायते । पर्व्वान्तः स तु विज्ञेयो मासो नैमित्तिकं प्रति" ॥
इति ज्योतिर्गार्ग्येणापि पर्व्वान्त इति सामान्येनोक्तं । नैमित्तिकं च
प्रतिसांवत्सरिकमुच्यते, सांवत्सरिके च चान्द्रमास एव विनियुक्तः ।
"आब्दिके पितृकार्य्ये च चान्द्रो मासः प्रशस्यते" । इति वचनात् ।

मानभेदेन मास-दिनसञ्ज्ञा विष्णुधर्म्मोत्तरे दर्शिता ।

मानेे मासस्तु नाक्षत्रः सप्तविंशतिभिर्दिनैः ।
परिशेषेषु मासेषु मासस्त्रिंशद्दिनः स्मृतः ॥

मासशब्दो यथोदितानां चतुर्णामपि मासानामनेकार्थगवादि-
शब्दवद्वाचको द्रष्टव्य इति केचित् । अपरे त्वाहुः मासशब्दश्चान्द्र-
मासविशेषवचनः "त्रयोदशमासाः संवत्सरः अस्ति त्रयोदशे मासः
अर्द्धमासे देवा इज्यन्ते मासि मासि पितृभ्यः क्रियन्त इत्यादि-
वैदिकप्रयोगस्य चान्द्रविषयत्वात्तेन यव-वराहादिशब्दवन्न सर्व्वत्र
मुख्यत्वं। पक्षौ पूर्व्वोत्तरौ शुक्ल-कृष्णौ मासस्तु तावुभावित्यमरसिंहे-
नाभिधानात् । इतरथा चान्द्रमास इत्यभिदध्यात् । एवमन्येष्वभि-
धानेषु चान्द्र एव मासशब्द इति निरूपितं । "मासः पक्षद्वयमिति
पुराणाद्यभिधानाच्च । न च चतुर्षु मासेष्वनुगतं मासत्वसामान्यम-
नुभूयते उपपद्यते वा, मासान्तरे प्रयोगस्तु प्रकारान्तरेणाप्युपपद्यत-
इत्यनेकार्थशक्तिकल्पनाभयाच्चान्द्र एव मुख्योमासशब्द इति। अत्र
केचिदाहुः चैत्र-वैशाखादिशब्दाश्चित्रा-विशाखाद्यनुराधादिनक्षत्राणा-
मेकतरनक्षत्रयुक्तपौर्णमासीयुक्तमासवचनाः पाणिनेरनुशासनादिति
यथोक्तं "नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति संज्ञायामिति"
'नक्षत्रेण' विशाखाद्यन्यतरेण, युक्ता पौर्णमासी वैशाखादिव्यपदेशभाक्

नक्षत्रयोगस्य न कार्त्स्न्येन किन्त्वेकदेशेनापि व्यपदेशे हेतुः ।

तथाच शङ्करगीता ।

आदिपादार्द्धमात्रेण नक्षत्रस्यान्वये ह्यसौ ।

तिथिरर्द्धेऽपि संयुक्ता विपरीता न सा पुनरिति ॥

सा पौर्णमासी यस्मिन्मासे स वैशाखादिपदाभिधेयः, 'संज्ञायामिति रूढिशब्दतां पुरस्करोति ।

तथाच च्यवनः ।

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मतः ।

शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थयेति ॥

सङ्कर्षणकाण्डेऽपि ।

द्वे द्वे चित्रादिताराणां परिपूर्णेन्दुसङ्गते ।

मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः ॥

तेन विशाखादियोगाद्वैशाखादित्वमिति नक्षत्रयोगः आदरणीयः । तथाच विष्णुः । माघी चेन्मघायुक्ता स्याद्वैशाखी चेद्विशाखायुक्ता स्यादिति । यत्तु वृत्तिकारेण पुष्ययोगात् पौषीत्याद्युदाहृतं तच्छिष्याणां सुखबोधार्थं नायमश्वकर्णादिवत्संबन्धी लुप्तावयवार्थः किन्तूद्भिदादिवद्यथाकथञ्चिदवाप्तप्रवृत्तिनिमित्त इति तस्याभिप्रायः, प्रकृति-प्रत्ययान्वाख्यानमपि गोशब्दस्येव गमेर्डो गच्छतीति गौरितिवदवसेयं । ततश्च वैशाखशब्देन पौर्णमासी वा नक्षत्रं वा तद्योगो वा तद्युक्ता वा पौर्णमासी नक्षत्रं वा तद्युक्तं पौर्णमासीयुक्तो वा तद्योग इत्यादिकल्पनावतारः । आगमप्रसिद्धिप्राबल्यादश्वकर्णादिशब्दतुल्यत्वानुपपत्तेः । तस्माद्वैशाख्यादिशब्दाः

यथोदितनक्षत्रयुक्तपौर्णमासीलक्षणकालवचनाः, वैशाखादिशब्दास्च तत्तन्नक्षत्रान्वितपौर्णमासीमध्यशुक्लप्रतिपदादिदर्शान्तचान्द्रमासवचनादिति स्थितं। कथं तर्हि सौरमासे वैशाखादिपदप्रवृत्तिः तत्रापि प्रसिद्धिप्राबल्यमस्ति। तत्र केचिदाहुः अनेकशक्तिकल्पनादोषाद्गौणीति । चान्द्रे हि मासे वैशाखादिशब्दप्रसिद्धिः अभियुक्तानां शास्त्रस्था, सौरे तु मासे न शास्त्रस्था, शास्त्रस्था च प्रसिद्धिर्बलीयसी न लौकिकी, तस्या गौणत्वेनाप्युपपत्तेः। तथाचाहुः "शास्त्रस्था तन्निमित्तत्वात् प्रतिपत्तेर्बलीयसी । लौकिकी प्रतिपत्तिस्तु गौणत्वेनापि नीयते" इति ॥

तदसत् प्रसिद्धोरविशेषात् । तथा च ज्योतिर्गार्ग्यः ।

सौरोमासोविवाहादौ यज्ञादौ सावनः स्मृतः ।

आब्दिके पितृकार्य्ये च चान्द्रोमासः प्रशस्यते ॥

वृहस्पतिः ।

विवाहे सौरमासे अधिकामर्थसिद्धिं प्राह वराहमिहिरः ।

चैत्रं प्राह पराशरः कथयते पौषञ्च दौर्भाग्यदम् ।

आषाढ़ादिचतुष्टयं न शुभदं कैश्चित्प्रदिष्टं द्विजैरित्यादि ॥

बौधायनश्च ।

कर्कटे तु हरौ सुप्ते शक्रध्वजक्रियाश्विने इति ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम् ।

द्विराषाढ़ः स विज्ञेयः शेते च श्रावणेऽच्युत इति ॥

तेन बौधायनादयः सौरमासे श्रावणादिपदानि प्रयुञ्जते तेनोभयापि प्रसिद्धिः शास्त्रस्था न विशेषेण सौरमासगता गौण्या वृत्त्या

समाधीयते प्रसिद्धिप्राबल्याच्चानेकशक्तिकल्पना अश्वादिशब्दवन्न विरुध्यते, आगोपालाङ्गनाजनपुरस्कृता सौरमासे वैशाखादिपदप्रसिद्धिः, केषाञ्चिदेव तु चान्द्रे। तस्मात् सौर-चान्द्रमासवचना एव मुख्यया वृत्त्या वैशाखादिशब्दा इति सिद्धमिति। तदयुक्तं उभयोरपि प्रसिद्ध्योः शास्त्रस्थलाविशेषेऽपि चान्द्रमासे वैशाखादिपदप्रसिद्धिः सार्व्वत्रिकी प्रबला सौरे तु न तथा, यत्तूक्तं आगोपालाङ्गनाजनपुरस्कृता च सौरे मासे वैशाखादिपदप्रसिद्धिः केषाञ्चिदेव तु चान्द्र इति, तदपि मिथ्यैव विपरीतस्यैव दर्शनात्। तथा च पाणिनिः "नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति संज्ञायामिति। न च सौर-सावनयोरेविंवधास्ति संज्ञा, तस्माच्चान्द्रमासवचना एव चैत्र-वैशाखादिशब्दाः। ऋतवस्तु सौर-चान्द्रमानेनैव मासद्वयात्मकाः। तत्र सौरमानेन विष्णुधर्मोत्तरे।

सौरमासद्वयं राम ऋतुरित्यभिधीयते।

चान्द्रमानेनापि त्रिकाण्डमण्डने।

श्रौत-स्मार्तक्रियाः सर्व्वाः कुर्य्याच्चान्द्रमासर्तुषु।
तदभावे तु सौरर्त्तुष्विति ज्योतिर्विदाम्मतम्॥
ऋतौ चान्द्रनिमित्तत्वं मन्त्रवर्णात्प्रतीयते।
ऋतूनन्योविदधज्जायते पुनरित्यतः॥
पुनः पुनर्योजायते स एव विदधदृतून्।
चन्द्रः पुनः पुनर्जन्मा तस्माच्चन्द्रवशादृतुः॥
होतृप्रकरणे चन्द्रं प्रकृत्य प्राह तित्तिरिः।
स ऋतून् कल्पयतीति चान्द्रोऽयं ऋतुकल्पकः॥

ते च षट् हेमन्त-शिशिरयोः समासेन पञ्च षड्वा ऋतवः पञ्चर्त्तवः हेमन्त-शिशिरयोः समासेनेति च श्रुतेः, ते च वसन्तोपक्रमाः मुखं वा एतदृतूनां यद्वसन्त इति श्रुतेः, ते च प्रत्येकं चैत्रादिमासद्वयात्मकाः, मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू, नभश्च नभस्यश्च वार्षिकावृतू, इषश्चोर्जश्च शारदावृतू, सहश्च सहस्यश्च हैमन्तिकावृतू, तपश्च तपस्यश्च शैशिरावृतू इत्याध्वर्य्यवादिश्रुतेः । मधुमाधवादिशब्दाश्चैत्र-वैशाखादिषु ग्रन्थान्तरे प्रयुक्ताः ।

चैत्रोमासोमधुः प्रोक्तो वैशाखो माधवो भवेत् ।
ज्यैष्ठमासश्च शुक्रः स्यादाषाढ़ः शुचिरुच्यते ॥
नभो मासः श्रावणः स्यान्नभस्यो भाद्र इष्यते ।
इष आश्वयुजो मासः कार्त्तिकश्चोर्जसंज्ञकः ॥
सहोमासो मार्गशिरः सहस्यः पौषनामकः ।
माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः ॥

बौधायनेन पुनर्मीन-मेषयोर्मेष-वृषयोर्वा वसन्त इत्यभिधानात् मीनादित्वं मेषादित्वं च वैकल्पिकं वसन्तस्याङ्गीकृतं, यदा त्वधिकमासो भवति तदा चान्द्रमानेन मासत्रयात्मकोऽपि कश्चिदृतुः सम्पद्यते।

तथाच त्रिकाण्डमण्डनेनोक्तम् ।

चान्द्रे माने यदा चैत्रमासादिर्मलिनस्तदा ।
शुद्धेऽपि मलिने चैत्रे वैशाखेऽपि वसन्तता ॥
ननु सैवेयमायाता मासत्रयवसन्तता ।
सत्यं गत्यन्तराभावात् सैवाचाभ्युपगम्यते ।
नन्वत्रापि विकल्पः किं तद्वन्नाभ्युपगम्यते ॥

मासास्त्रयो वसन्तस्याः त्यक्त्वाद्यमथवान्तिमम् ।
अत्रोच्यते विकल्पो हि सौरमासेषु युज्यते ॥
न तु चान्द्रेषु युक्तोऽसौ मलमासानुवर्त्तिषु ।
द्वादशैव हि ते मासाः सूर्य्यसंक्रान्तिसम्मिताः ॥
द्वौ द्वौ मासाविहैकैकमृतुं कृत्वा तु गण्यते ।
ऋतवस्तत्र मीनाद्या मेषाद्या वा षड़ेव हि ॥
चान्द्रस्तु मलिने मासे प्राप्ते मासास्त्रयोदश ।
विकल्पन्तेऽत्र यत्किञ्चिन्मासमारभ्य युग्मतः ॥
ऋतुषु क्रियमाणेषु मास एकोऽतिरिच्यते ।
किमसावनृतुर्मासः किञ्चर्तुः सप्तमो भवेत् ॥
प्रकृतर्त्तुषु वा क्वापि प्रविशत्विति चिन्त्यते ।
ऋतुशून्यो न कालोऽस्ति नाप्यृतुः सप्तमः श्रुतौ ॥
तत्रर्त्तुर्ऋतुनाऽयुज्यमान इत्यृतुशून्यता ।
षड़् वा ऋतव इत्येषा श्रुतिः सप्तमवारिका ॥
अतः श्रुतेः स्मृतिर्बाध्या द्वौ मासावृतुरित्यसौ ।
तस्मादधिकमासः स्यात्तेष्वेवर्त्तुषु कुत्रचित् ॥
यत्रैषोऽन्तर्भवेन्मासः स ऋतुः स्यात् त्रिमासिकः ।
यद्वा षष्टिदिनैर्मास एक एवोभयात्मकः ।
अतोऽत्रापि वसन्तत्वं स्याद्द्वयोरेव मासयोः ॥

अयनञ्च सौरमृतुत्रयेण तथा च सौरमानमधिकृत्य विष्णुधर्मोत्तरे "ऋतुत्रयञ्चायनं स्यादिति, तथाच संवत्सरोऽपि चान्द्रैर्मासैश्चान्द्रः सावनैः सावनः सौरैः सौर इति त्रिविधः। तथाचोक्तं ब्रह्मसिद्धान्ते।

चान्द्र-सावन-सौराणां मासानान्तु प्रभेदतः ।
चान्द्र-सावन-सौराख्यास्त्रयः संवत्सरा अपि ॥

ते च द्वादशमासात्मकाः "द्वादश मासाः संवत्सर इति श्रुतेः। चान्द्रस्तु संवत्सरः कदाचित्त्रयोदशमासात्मको भवति, अस्ति त्रयोदशो मास इत्याहुरिति श्रुतेः । चान्द्रमान एव त्रयोदशमासस्य सम्भवात् ।

तथाच विष्णुधर्मोत्तरे ।

सौरसंवत्सरस्यान्ते मानेन शशिनो यदा ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥

चान्द्रसंवत्सरस्य चैत्रशुक्लप्रतिपद्युपक्रमः ।

तथा ब्रह्मपुराणे संवत्सरारम्भविधिक्रमे ।

चैत्रे मासि सृजन् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तथा सूर्य्योदये सति ॥
प्रवर्त्तयामास तथा कालस्य गणनामिह ।
ग्रहान्नागानृतून्मासान् वत्सरान् वत्सराधिपान् ॥

ब्रह्मसिद्धान्ते।

चैत्रसितादेरुदयात् भानोर्दिन-मास-वर्ष-युग-कल्पाः सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य सौरः संवत्सरः, पुनर्मीनादिर्मेषादिर्वा वसन्तस्य विकल्पेन मीनादित्वस्य मेषादित्वस्य चोक्तत्वाद्वसन्तस्य च ऋतुमुख्यत्वात् संवत्सरमुखस्यैव ऋतुमुखत्वोपपत्तेः ।

यत्तु विष्णुधर्मोत्तरे ।

माघशुक्लसमारम्भे चन्द्रार्कौ वासवर्त्तगौ ।

जीवयुक्तौ यदा स्यातां षष्ट्याब्दादिस्तदा स्मृतः ॥

इति माघशुक्लप्रतिपदुपक्रमत्वं संवत्सराणां, तज्ज्योतिःशास्त्र-प्रसिद्धशुभाशुभफलप्रतिपादनार्थं न तु धर्मानुष्ठानार्थमिति मन्तव्यं। प्रभवादिषष्टिसंवत्सराणां आदितः पञ्चानां पञ्चानां युगसंज्ञकानां यथासङ्ख्यं संवत्सर-परिवत्सरेद्वावत्सरानुवत्सरोद्वत्सराख्याः ।

तथा ब्रह्मवैवर्त्ते ।

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वावत्सरस्तृतीयस्तु चतुर्थस्त्वानुवत्सरः ।
उद्वत्सरः पञ्चमस्तु कालस्तु युगसंज्ञित इति ॥

तथाच कालस्य यथोक्तप्रकारेणावच्छेदसम्भवादनादिनिधनस्यापि यथायथं व्रतादिधर्मानुष्ठानाङ्गत्वमुपपद्यत इति निर्णयः क्रियते। तत्र संवत्सरादेः कालस्य संवत्सरव्रतादौ यथायथमुपयोगो द्रष्टव्यः ।

अयनस्य तु स एवाह ।

देवताराम-वाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् ॥

सौर-सावन-चान्द्र-नाक्षत्राणां मासानां पुनः कुत्र कस्योपयोग इत्यपेक्षायामुक्तं विष्णुधर्मोत्तरे ।

एवं कालस्य सूक्ष्मस्य प्रोक्तं मासचतुष्टयम् ।
येन येन च मासेन यच्च कार्य्यं निबोधत ॥
अथायनर्तु-ग्रहचारकर्म्म
सौरेण मानेन सदाध्यवस्येत् ।
सत्राण्युपास्यान्यथ सावनेन

सौख्यञ्च यस्यात् व्यवहारकर्म्म ॥
स्यात् पूर्वकालत्रयपूरणाभ्याम्
चान्द्रेण मानेन युगञ्च राशेः ।
नक्षत्रसत्राण्ययनानि चेन्दो-
र्मानेन कुर्य्याद्भगणात्मकेन ॥

ऋष्यशृङ्गः ।

विवाह-व्रत-यज्ञेषु सौरं मानं प्रशस्यते ।
पार्वणेऽन्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥

ज्योतिर्गार्ग्ये ।

विवाहोत्सव-यज्ञेषु सौरं मानं प्रशस्यते ।

तथा स्मृत्यन्तरे ।

एकोद्दिष्टविवाहादौ ऋणादौ सौर-सावनौ ।
सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः ॥

तथाच ज्योतिर्गार्ग्ये ।

सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च चान्द्रोमासः प्रशस्यते ॥

'आब्दिके' सांवत्सरिकमृताहश्राद्धे । 'पितृकार्य्ये' षाण्मासिकश्राद्धादौ, चशब्दान्मास-संवत्सरसाध्ये यज्ञव्यतिरिक्ते सर्व्वस्मिन् देवकार्य्ये चान्द्रोमासः प्रशस्त इत्युक्तं ।

उक्तञ्च पितामहेन ।

दैवे कर्म्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ॥

ब्रह्मसिद्धान्ते । -

प्रतिसंवत्सरश्राद्धे मासश्चान्द्रमसः स्मृतः ॥

बृहस्पतिः ।

रवेरभ्युदये मानं चन्द्रस्य पितृकर्मणि ।
यज्ञे सावनमित्याहुराद्यं सर्वव्रतादिषु ॥

ज्योतिर्गार्ग्यः ।

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेनैव कर्त्तव्या शत्रूणां वाप्युपासना ॥

यथः पाण्डवैः कौरवाणां ब्रह्मसिद्धान्तात् ।

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
संक्रान्ति-पौर्णमासाभ्यां तथैव नृप-वैश्ययोः ॥

अत्रादिशब्दार्थः श्रीधरेण दर्शितः ।

विवाहोपनयन-चूड़ा-व्रत-नियम-प्रतिष्ठा-गृहकरण-चौर-यात्रा-महाषष्ठी—महासप्तमी-विजयदशमी-दशहरा-युगादि-महाज्येष्ठा—प्रभृत्यादिशब्देनोपादीयते, यज्ञादावित्यादिशब्देन याग-दान-होम-गर्भाधान-सीमन्तोन्नयन-जातकर्म-ऋण-क्रय-विक्रय-व्यवहार—ग्रहणं । तथा—"सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः" इत्यत्र पितृकृत्यादावित्यादिशब्देन वृद्ध्यभिषेक-संवत्सरश्राद्ध-पार्वणाष्टकादेवपयन-चूड़ा-व्रतनियम-प्रतिष्ठा-गृहकरण-चौर-यात्रा-शक्रोत्सवादिग्रहणं । तथाच प्रथमराशितः प्रभृतिगोचराष्टवर्गानुसरणक्रमेण तत्तद्राशिभोगसम्बन्धेन शुभाशुभोपभोगात् ।

मङ्गलेषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्र-पौषविवर्जिता इति ॥

मासोपदेशे सौरमासाश्रयणं सावनस्य च मासस्य नियतचिंश-द्दिवसत्वान्निषेकदिवसात् प्रभृतिषु षष्ठाष्टमासेषु पुंसवनादेर्विधानात् "मासमग्निहोत्रं जुहोतीति "चातुर्मास्येन यजेतेत्यादिष्वनियतदिवस-मासपरिग्रहानुपपत्तेर्नियतपदेन सावनग्रहणं। तथा "मासि मासि पिण्डपितृयज्ञेन चरन्तीति। "नभस्यस्यापरे पक्षे तिथिषोड़षकञ्च यत्" इत्यादितिथिसम्बन्धेन विहितपितृकार्य्यसितासितविधिनियम-मन्तरेण सांवत्सरिकं प्रति नियमानुपपत्तेः सर्वत्र तिथिभोगे चान्द्र-मासाश्रयणमिति। अत्र पण्डितपरितोषकृतोक्तं आदिशब्देन व्यव-स्थिताः यथा परिगणिता विवाहादयो गृहीतव्या इति कुतोऽवगतं अव्यवस्थितग्रहणबाधकप्रमाणाभावात्तथा हि सौरोदेवशयनादिषु विहितस्यान्द्रमासाश्रयणं च द्वादश्यादितिथिवशेन शयनादिषु क्रियायां दृश्यते, यदाह गार्ग्यः।

द्विराषाढ़ा क्रिया तावद्यावद्विष्णोः प्रबोधनम्।
प्रबुद्धे तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया॥

अथ च "विष्णुः स्वपिति कर्कटे इति द्विराषाढ़ेऽपि राशिभोग-पुरस्कारो दृश्यते, न चोपनयनान्नप्राशनादिषु सौरमास इत्यैकान्ति-कगर्भादिसङ्ख्या वर्षाणां "गर्भाष्टमे ब्राह्मणमुपनयीतेति, "षष्ठेऽन्नप्राशनं मासि" "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी" इत्यादिगौतमव-चनैः सावनमासपुरस्काराच्च च सावने मासि सितासितपक्षपरिहरण-मस्ति। सति च तिथिपरिग्रहे चान्द्रमासाश्रयणमपि शक्यते वक्तुं। किञ्च "यासौ वैशाख्यमावास्या रौहिण्या सम्पद्यते तस्यामादधीतेति चान्द्रे मास्याधानविधानादयज्ञादौ सावनविधिरनैकान्तिकः।

विवाह-व्रत-यज्ञेषु सौरमानं प्रशस्यत इति ।

यज्ञेष्वपि सौरं मानं दर्शयति ।

अनेन विधिना श्राद्धं त्रिपेत्रमिह निर्वपेत् ।

कन्या-कुम्भ-वृषस्थेऽर्के कृष्णपक्षेषु सर्वदा ॥

कन्यायोगात्सवितरि पितृयज्ञानुशासनात् ।

तावत्पितृपुरी शून्या यावद्वृश्चिकदर्शनमिति ॥

सौरमानेनापि पितृकार्य्योपदेशात् न च सांवत्सरश्राद्धे चान्द्र-इत्यैकान्तिकं ।

यस्मिन् राशौ गते सूर्य्ये विपत्तिं यान्ति मानवाः ।

तेषां तत्रैव कर्त्तव्याः पिण्डदानोदकक्रियाः

इति व्याघ्रवचनं हि सौरमानं दर्शयति ।

प्रचेताः पुनराह ।

प्रेतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरम् ।

यावत् स्मरति पौत्रोऽपि तेषां तत्रैव दापयेदिति ॥

न च व्रतनियमादिकं सौरे क्रियते इत्यैकान्तिकं, चातुर्मास्य-व्रतानां हरिशयनवशेनारम्भसमाप्त्युपदेशात् मासोपवासस्य चाश्विन-पक्षशुक्लैकादश्यामुपक्रान्तस्य तथाविधैकादश्यन्तमुपवासात् सावन-चान्द्रयोरेकतममपि नियतं, न च देवशयनऽशक्रोत्सवादि चान्द्रमासे विहितमप्यैकान्तिकं, विष्णुः स्वपिति कर्कटे ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम् ।

कन्यायामम्बिकां देवीं सिंहे चैव पुरन्दरम् ॥

तस्मिन् सुप्ते यदा विष्णुस्तुलायामपि वृश्चिके ।

इत्यादि बौधायनवचनवशेन हि सौरं प्रतीयते ।

यदपि पठन्ति ।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

उपाकर्म्म तथा षष्ठ्यां ह्येतदिष्टं वृषादित इति ॥

तदप्यनैकान्तिकं प्रौष्ठपद्यां हस्तेनोपाकरणं श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधीत्यादिगोभिलादिवचनाच्चान्द्रमासावगतेः । यदपि पितामहवचनम् ।

कार्त्तिकस्य तु यत्स्नानं माघे मासि विशेषतः ।

कृच्छ्रादिनियमानाञ्च चान्द्रमानं प्रमाणतः ॥

इति तदनैकान्तिकं "तुला-मकर-मेषेषु प्रातःस्नानं विधीयते" इति पद्मपुराणवचनात्। न च कृच्छ्रादिनियमे चान्द्रमानमनैकान्तिकं तथा हि चान्द्रायणं प्रक्रम्य मनुः ।

यथाकथञ्चित् पिण्डानां तिस्रोऽशीतिसमाहितः ।

मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥

इति वदन् सावनमासं पुरस्करोति । "तिथिवृद्ध्या चरेत्पिण्डा-निति याज्ञवल्क्यश्चान्द्रायणं दर्शयति । तथा

पतितेन तु सम्पर्कौ मासं मासार्द्धमेव वा ।

गोमूत्र-यावकाहारो मासार्द्धेन विशुध्यति ॥

इति सावनं मासं दर्शयति। अन्यथा तु कतिपयदिनाधिके मासंसर्गनिमित्तप्रायश्चित्तकल्पनामूलमासानुसारेण सौरचान्द्रयो-रनियतदिवसतया कल्पनानुपपत्तेर्नियतदिनसावनमासाश्रयोयुज्यते। एवं वर्षमितेऽपि प्रायश्चित्ते सावनमासग्रहणं । तस्मात् सौरो मासो

विवाहादाविति । विवाहशब्देन यथापरिगणितेन विवाहादयो गृह्यन्त इत्यन्यथा वर्णनीयं । तथा हि यत्र मेषादिराशिभोगव्यपदेशेन कर्मविधिः तत्र सौरमासाश्रयणेन कर्माण्यनुष्ठेयानि, भाद्रपदादिव्यपदेशेन यदि तान्येव यथा "द्वादश्यां शुक्लपक्षे च मासि भाद्रपदे" इति,

तथा "शक्रमुपस्थापयेद्राजेति, तथा "सिंहे शक्रध्वजक्रियेति । तत्र सिंहभाद्रपदयोः सामान्य-विशेषन्यायेनाविरोधादुभयसमावेशः सुकरः । यत्र सामान्येन "दश मासाः प्रशस्यन्ते चैत्र-पौषविवर्ज्जिताः" इति श्रूयते तत्र चैत्रादिशब्दानां सौर-चान्द्रसाधारणत्वात् सन्देहे विवाहे सौरराशिर्गम्यते । तद्राशिवशेन हि शुभाशुभफलं श्रूयते । "सौरोमासोविवाहादाविति वचनात् सौर एव युज्यते । सौरे च वैशाखे गृह्यमाणे यदि तत्र चित्रायुक्तपौर्णमासीसम्बन्धो दृश्यते तदा चैत्रव्यपदेशोर्हत्वान्न निषेधविषयत्वं सौरस्यागमबलीयस्त्वेन निषेधस्य च पौर्णमाससम्बन्धेनाप्युपपत्तेः । सदपि चैत्रत्वमसत्कल्पमेव तथा "गर्भादिसङ्ख्या वर्षाणामिति यद्यपि सावनपरिग्रहः तथाप्युपनयनादिषु राशिभोगजन्यशुभाशुभफलानुसारेण लग्नाद्युपपादनवशात् सौरग्रहोविरोधादुपपद्यत-इत्यभिप्रेत्योक्तं । "सौरमासो विवाहादाविति न पुनरन्यस्य मासस्य विवाहादौ निराकरणमवगम्यते । तथाच वराहमिहिरः । "वृहस्पतौ शोभनगोचरस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः" इति वृहस्पतेः शुद्धिं वदंश्चान्द्रमासं पुरस्करोति "संवत्सरं गुरुस्तिष्ठति" "पक्षत्रयं भूमिजः" इति च सावन-चान्द्रमानं सम्भवत्येवं नियतदिवसक्रममासद्वादशावच्छिन्न-

त्वात् सावनवर्षस्य वृहस्पतिराशिमतभोगस्य च नियतदिवसक्रम-मासद्वादशावच्छिन्नत्वादङ्गारकगड्डेरपि चापेक्षितत्वात्तद्राशिभोगे-ऽपि चान्द्रमासग्रहणमेव तथा "संसृते भृगुतनये कन्या क्रियत इति, "वृहस्पतौ पुरुष इत्यादिवचनं क्वचित्सावनं क्वचिच्चान्द्रमानं पुरस्क-रोति । एवं यज्ञादेरपि सावनमासादेरनियम इति दर्शितं तस्माच्च तद्वचनवशेन सर्व्वेष्वेव कर्मसु सर्वेषामेव चान्द्रादिमासानां सम्भवः किन्तु क्वचित् क्वचित्प्रशस्तं तदुक्तं प्रशस्यते इति । यत्र तु एकस्मिन् विषये. चान्द्रप्रशंसा तत्रैव च सौरस्य यथा कार्त्तिकस्नाने, तत्रोदितानुदित-होमनिन्दा-प्रशंसान्यायेन व्यवस्थितशाखाविकल्पवदनुष्ठानं तस्मादा-दिशब्देन व्यवस्थिता विवाहादयो गृह्यन्त इति वचनमशोभनं यथो-क्तमेव साधीय इति । वयन्तु ब्रूमः यस्मिन् क्रियान्तरे वचनान्तरेण सौरादिमासा विनियुक्तास्तत्कार्य्यमादिशब्देनोपादीयते । यत्र तु मासविशेषग्रहणे कारणं न विद्यते तत्र चान्द्र एव ग्राह्यः । चैत्र-वैशाखादिपदानां चान्द्र एव मुख्यत्वादिति ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-
सकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ
परिशेषखण्डे कालनिर्णये संवत्सरायण-मासविशेषाणां
कार्य्यविशेषोपयोगनिरूपणं नाम प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः।

## अथ मलमासनिर्णयः ।

तत्र मलमासस्वरूपं लघुहारीतेन दर्शितम् ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन ।
आद्योमलिम्लुचोज्ञेयो द्वितीयः प्राकृतः स्मृतः इति ॥

'इन्द्राग्नी यत्र हूयेते' इति शुक्लप्रतिपदुपलक्षणं, 'अग्नीषोमाविति कृष्णप्रतिपदः, पितृसोमकाविति दर्शस्य। एतेन चान्द्रमास उपलक्षितः तं माममतिक्रम्यान्यस्मिन् मासे यदा सूर्यो राश्यन्तरं गच्छेत्तदा पूर्वो मलिम्लुचः उत्तरः प्राकृतः ।

तथाच ब्रह्मसिद्धान्ते ।

चान्द्रो मासोऽप्यसंक्रान्तो मलमासः प्रकीर्त्तितः ।

नन्दिपुराणे ।

अमावास्यामहोरात्रे यदा संक्रमते रविः ।
स तु मासः पवित्रः स्यादतीते ह्यधिको भवेत् ॥

अमावास्यां प्राप्य यदाहनि वा रात्रौ वा रविः संक्रामति तदा स चान्द्रो मासः पवित्रः स्यात्। यदा पुनरमावास्याव्याप्ते अहोरात्रे व्यतीते सति प्रतिपदि संक्रामति तदा चान्द्रोमासोऽधिमासः स्यात्।

ज्योतिःशास्त्रे ।

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम् ।

मलिम्लुचः स विज्ञेय उत्तरश्चुत्तमाभिधः ।
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ॥
वरुणः सूर्यो भानुस्तपनश्चण्डो रविर्गभस्तिश्च
अर्य्यमा हिरण्यरेता दिवाकरो मित्र-विष्णू च ।
एते द्वादशनामानः सूर्य्या माघादिषूदयन्ति मासेषु
निःसूर्य्योऽधिकमासो मलिम्लुचाख्यस्ततः पापः ॥
मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम् ।
नपुंसकेऽधिके मासि मण्डलं तपते रविः ॥
असंक्रान्तो हि यो मासः कदाचित्तिथिवृद्धितः ।
कालान्तरात् समायाति स नपुंसक उच्यते॥

स तु कदा भवतीत्यपेक्षायां वशिष्ठसिद्धान्ते उक्तम् ।

द्वात्रिंशद्भिर्गतमासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्यधिकमासकः ॥

अतीताधिकमासादारभ्य द्वात्रिंशन्मासादुपरि षोडशदिनेषु घटिकाचतुष्टयाधिकेषु गतेष्वधिकमासो भवतीत्यर्थः ।

यत्तु विष्णुधर्मोत्तरेऽभिहितम् ।

सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावने तु तदा माने दिनषट्कं प्रपूर्यते ॥
ऊनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ।

स चाधिमासकः प्रोक्तः काम्यकर्म्मसु गर्हितः ॥

तथा काठकगृह्ये "मासे त्रिंशत्तमे भवेदिति ।

महाभारते ।

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायते ।

तेषां कालातिरेकेण ग्रहाणामतिचारतः ॥ इति ।

तदेतत्सर्वमर्वाङ्मलमासो न सम्भवत्येवं परं। ननु एकस्मिन् वत्सरे संक्रान्तिरहितं मासद्वयं ज्योतिःसिद्धान्तेऽभिहितम् । "असंक्रान्तमासोऽधिमासः स्फुटः स्यात् द्विसंक्रान्तिमासः कदाचित् क्षयाख्यः। क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽपि मासद्वयं चेति तत्कथमुच्यते द्वात्रिंशन्मासादर्वाङ्मलमासो न सम्भवतीति, उच्यते यद्यप्येकस्मिन् वत्सरे संक्रान्तिरहितं मासद्वयं भवतीति तथापि तयोरेक एव मलमासः द्वात्रिंशन्मासादूर्द्धं यः सम्पद्यते, अपरः संक्रान्तिरहितोऽपि न मलमासः अकालाधिक्यात्कालाधिक्यस्यैव मलत्वात्। तथाच गृह्यपरिशिष्टे ।

मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति ।

तथाच विष्णुधर्म्मोत्तरे ।

स चाधिमासकः प्रोक्तः काम्यकर्म्मसु गर्हित इति ।

अधिशब्देनावयवेनाधिक्यलक्षणयाधिक्यप्रतीतेः यथोरुकमिति क-शब्देन मांसवाचककासशब्दलक्षणया मांसस्य ततस्तु मासशब्दतुल्य एवासौ

तथाच जाबालिः ।

एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ ।

पूर्व्वीमासः प्रशस्तः स्यादपरस्त्वधिमासकः ॥

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

इत्यादिपूर्वाधिकमासादारभ्य द्वात्रिंशन्मासादूर्द्ध्वं पूर्वं योऽसंक्रान्तः स प्राकृतः शुद्ध इत्यर्थः, यस्ततः परः सोऽधिमासो मलमास इत्यर्थः । तथाच द्वात्रिंन्मासादूर्द्ध्वं योऽसंक्रान्तोमासः सोऽधिमासः, ततोऽर्वाग्यो-ऽसंक्रान्तोमासः स प्राकृतोनाधिमास इत्यर्थः, न त्वत्र मासपौर्वापर्य्यं विवक्षितं वक्ष्यमाणवचनविरोधात् । यत्तु तदा वर्षमध्ये अधिमासद्वयं चेत्यभिधानं तदसंक्रान्तत्वादसंक्रान्तोमासः "रविणा लङ्घितोमास इत्या-दिवचनात् न तु कर्मानर्हत्वादिति । यदा त्वेकस्मिन् वत्सरे आश्वि-नादिषट्कमध्ये संक्रान्तिशून्य एकोमासः चैत्रादिषट्कमध्ये त्वपरः, तदा द्वात्रिंशन्मासादूर्द्ध्वमपि भवेत् पूर्वोमासोनाधिकोमासः परतस्तु भवति।

तथाच ब्रह्मसिद्धान्ते ।

चैत्रादर्वाङ्नाधिमासः परस्तादधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्त्तिस्त्रयोदशी ॥

तस्मिन्नुत्तरस्मिन्नेव मासे त्रयोदशी मूर्त्तिः न तु पूर्वस्मिन्नपि विरोधादिति भावः । "चैत्रादर्वागित्यत्राश्विनादारभ्येति द्रष्टव्यम् । उक्तं हि ज्योतिःसिद्धान्ते ।

घट-कन्यागते सूर्ये वृश्चिके वाथ धन्विनि।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते इति ॥

यदि तु सामान्यतोऽधिमासमात्रनिषेधपरं वचनद्वयं तदा

मास कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम् ॥

इति ज्योतिःपितामहस्मरणं विरुध्येत बहुबाधश्च स्यात्, तस्मादाद्ययो-
रुक्तविषयमेवेति। यदा त्वेकस्मिन्नाश्विनादिषट्के संक्रान्तिरहितमास-
द्वयं भवति तदा

प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः।

इत्येतदेव द्रष्टव्यं चैत्रादिषट्के त्वधिकमासद्वयं न भवत्येव तस्य
क्षयमासोभयपूर्व्वपार्श्ववृत्तित्वात् क्षयस्य च कार्त्तिकादित्रयनियतत्व-
स्योक्तत्वादिति। तथा द्विसंक्रान्तोऽपि क्षयाख्योमलमासः।

तथाच काठकगृह्ये।

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा।

मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति॥

अत्र केचिन्मासत्रज्ञापि लक्षणान्तर्गतेत्याहुः, तन्न, स विज्ञेय इति
लक्षणवाक्ये समाप्ते त्रिंशत्तम इत्यभिधानात् पूर्वोदाहृतवचनाच्च।
अपि च यत्किञ्चिदपेक्ष्य त्रिंशत्तमत्वमत्र लक्षणं मलमासापेक्षया वा
नाद्यः अतिव्याप्तेः, न द्वितीयः आत्माश्रयात् शुद्धादिमासे व्यापकत्वाच्च
तस्य त्रिंशत्तमत्वाभावादमलमासत्वाच्च तदुत्तरः सर्वो न मलमासः
स्यादिति लक्षणव्याघातान्न लक्षणं, यत्रैकस्मिन् वत्सरेऽसंक्रान्तं मास-
द्वयं संक्रान्तिद्वययुतोमासश्च तत्र यावसंक्रान्त-द्विसंक्रान्तौ तौ संस-
र्पांहस्पतिसंज्ञौ अन्यश्चाधिमासः।

तथा बार्हस्पत्यज्योतिर्ग्रन्थे।

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव च।

संसर्पांहस्पती मासावधिमासश्च निन्दितः॥

श्रुतिरपि "संसर्पोऽस्यंहस्पतये त्वेत्याह अस्ति त्रयोदशोमास-

इत्याङ्कस्तमेव तत्प्रीणातीति। अत्र ज्योतिःशास्त्रे प्रसिद्धविवाहादि-कर्मसु त्रयोऽपि निन्दिताः क्षयाधिकमासौ तु श्रौत-स्मार्त्तकाम्यकर्म्म-स्वपि निन्दितौ क्षयस्याऽंहस्पतित्वेन कालमलरूपत्वादंहसस्य मल-त्वात् अधिकमासस्य कालाधिक्येनाऽपवित्रत्वात् ।

तथाच स्मृत्यन्तरे ।

अमावास्यामहोरात्रे यदा संक्रमते रविः ।

स तु मासः पवित्रः स्यादतीते ह्यधिको भवेत् ॥

अत्र केचिदाहुः विश्वप्रकाशमतदूषणायोपन्यस्येदधिमासस्तावच्चैत्रादिसंज्ञां लभते। ननु चैत्रादिमाससंज्ञानां मेषादिसङ्क्रान्ति-निबन्धनत्वादधिमासस्य सङ्क्रान्तिरहितत्वाच्चैत्रोऽधिमासो वैशाखो-ऽधिमास इत्यादिव्यवहारो न स्यात्, तथाहि चैत्रादिरूपजात्या तावच्चैत्रादिशब्दप्रवृत्तावनुगतः कश्चिदुपाधिः स्वीकार्य्यः, यौगिक-त्वेऽपि चित्रालक्षितपौर्णमासीयुक्ते चैत्रपदप्रयोगार्थं उपाध्याश्रयणं तुल्यं। न च मेषादिसंक्रान्तियोगातिरिक्त उपाधिर्दृश्यते, न च फा-ल्गुनोत्तरत्वं उपाधिः, वैशाखपूर्वत्वस्यापि प्रसङ्गादविशेषात् द्वयोपा-धिकत्ववैयर्थ्यात् विकल्पेनोपाधित्वे अनेकार्थत्वापातात् फाल्गुना-नन्तरमधिमासे च तदुत्तरस्य चैत्रत्वं स्यात्। किञ्च चैत्रवत् फाल्गु-नस्य माघोत्तरत्वं तस्य पुष्योत्तरत्वमिति क्रमेण चैत्रोत्तरत्वं वैशा-खस्येति चक्रकदोषः अतो मेषादिसंक्रान्तियोग एवोपाधिः। किञ्च वेदे मधुश्चेति द्वादशमासाः संवत्सर इति द्वादश संज्ञा अनुक्रम्य संसर्पोऽहीति संज्ञान्तरत्वमर्थान्तरवियुक्तं त्रयोदशमासाः संवत्सर इति सञ्ज्ञा पृथक्त्वे युक्ता तेन चैत्राद्याधिक्यान्न तत्संज्ञ इति, उच्यते

यदि ह्यधिकमासः शुद्धात् पृथग्भूतः स्यात् स्यादेवं, न त्वेवमस्ति.
किन्त्वसौ शुद्धान्तर्भूत एव ।

तदुक्तं ।

"षष्ट्या तु दिवसैर्मासः कथितो वादरायणैरिति ।

"एवं षष्टिदिनोमासस्तदर्द्धं च मलिम्लुच इति च । न च वाच्यं अत्र मासशब्दः एकशेषवृत्तिः यत् द्विवचनाभावेऽपि मासद्वित्वावगतेरेकवचनमेव संक्रान्तियोगोपाधिः तेनाधिमासो न चैत्रादिरिति, सकललोकसिद्धचैत्रादिव्यवहारस्याभावप्रसङ्गात् संवर्पशब्दस्यैकदेशवचनस्यार्थान्तरविषयत्वमस्य तत्पक्षेऽपि विद्यत एव । श्रुतिश्च त्रिंशद्दिनतन्मासविवक्षयेति । अतो यदा यदा यदन्तर्भूतोऽसौ तदा तत्संज्ञया व्यपदिश्यत इति न दोषः । नन्वेवमधिमासस्य शुद्धमासद्वयमध्यपातित्वात् किमसौ पूर्वस्योत्तरार्द्धं किं वोत्तरस्य पूर्वार्द्धमिति निर्द्धारणकारणाभावात् संज्ञानिर्द्धारो दुर्घटः, उच्यते अधिमासस्योत्तरमासपूर्वार्द्धत्वादुत्तरमाससंज्ञा ।

तदुक्तम् ।

आद्यो मलिम्लुचोज्ञेयो द्वितीयः प्राकृतः स्मृतः ।

षष्टिदिनात्मकमासस्य 'आद्यः' पूर्वभागः, 'मलिम्लुचः' अशुद्धः कर्मानर्होज्ञेयः, 'द्वितीयः' उत्तरोभागः, 'प्राकृतः' शुद्ध इत्यर्थः ।

ज्योतिःशास्त्रे पितामहोऽपि ।

षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः ।

पूर्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

एवं सर्वत्राधिमासस्योत्तरमासपूर्वार्द्धत्वे प्राप्ते क्वचिदपवादमाह ।

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः ॥

एकस्मिन् वर्षे यदा द्वौ मासावसंक्रान्तौ भवतस्तदा वैपरीत्यं, षष्टिदिनात्मकस्य मासस्य पूर्वोभागः 'प्राकृतः' शुद्धः, उत्तरोभागो मलिम्लुच इत्यर्थः । एकाब्दमध्यवर्त्तिनौ द्वावधिमासौ पूर्वमासोत्तराद्धत्वात् पूर्वमाससंज्ञावित्यभिप्रायः । युक्तं चैतत् अधिमासस्य पूर्वभागः प्राकृतः उत्तरोभागो मलिम्लुचः तस्य वृद्धित्वाद्वृद्धेश्च पूर्वनिष्ठत्वनियमात् । अन्यथा तिथिवृद्धेरप्युत्तरतिथिसंज्ञत्वापत्तेः एकाधिमासस्य तु "इन्द्राग्नी यत्र हूयेते" इत्यादिन्यायाद्बलीयसा वचनेनोत्तरमाससंज्ञत्वमभिहितं । अतएवोक्तं ।

एकत्र मासद्वितयं यदि स्यात्
वर्षेऽधिकं तत्र परोऽधिमासः ।

नन्वेकस्मिन् संवत्सरे चतुर्दश मासाः स्युरित्यत आह,
त्रयोदशं तु श्रुतिराह मासं चतुर्दशः क्वापि न चैव दृष्टः ।

एकस्मिन्वर्षेऽधिमासद्वयेऽपि मासास्त्रयोदशैव "यद्वर्षमध्येऽधिकमासयुग्मं तत्कार्त्तिकादित्रितये त्रयास्य इति वचनादित्यभिप्रायः । केचित् "मासद्वयेऽब्दमध्ये त्वित्यादिवचनानामेवं व्याख्यानं कृतं यदैकस्मिन्वर्षे द्वौ मासावसंक्रान्तौ भवतस्तत्र तयोरसंक्रान्तयोर्मध्ये यः पूर्वोऽसंक्रान्तः स प्राकृतः शुद्धः कर्मार्हः, उत्तरस्त्वसंक्रान्तो मलिम्लुचः कर्मानर्हः, दुर्गेन्द्रस्थापनोत्थाने न च वज्रिणः, "पूर्ववत्प्रतिषिद्धानि परतो न च दैविकम्" इति, तदुक्तं "एकत्र मासद्वितयमित्यादिनेति तदयुक्तं अनेकवचनविरोधात् । तथा हि,

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयः सर्वधर्मबहिष्कृतः ॥
सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
भानुना लङ्घितो मासो ह्यनर्हः सर्वकर्मसु ॥
यस्मिन्वर्षे द्विसंक्रान्तोऽधिकमासद्वयं तदा ।
तद्धि मासत्रयं दुष्टं सर्वेषु शुभकर्मसु ॥
संसर्पांहस्पती मासावधिमासश्च निन्दिताः ।
यद्वर्षमध्येऽधिकमासयुग्मं
तत्कार्त्तिकादित्रितये चयाख्ये ।
मासत्रयं त्याज्यमिदं प्रयत्नाद्-
विवाह-यज्ञोत्सवमङ्गलेषु ॥
सप्तम्यामुदिते सूर्य्ये परतश्चाष्टमी भवेत् ।
तत्र दुर्गोत्सवं कुर्य्यान्न कुर्य्यादपरेऽहनि ॥

इति निर्णयामृतवचनमित्यादि । तस्मात् पूर्वा व्याख्या ज्यायसी ।

यत्तु वचनम् ।

चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्त्तिस्त्रयोदशी ॥

यदपि ।

घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि ।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते ॥

इति तदुभयमप्याश्विनादीनां फाल्गुनान्तानां पूर्वभागा अधिमासा न भवन्तीत्येवंपरं, न तु सर्वथैवाधिमासा न भवन्तीत्येवंपरं

"दशानां फाल्गुनादीनां प्रायोमाघस्य तु क्वचित् नपुंसकत्वं भवतीति वचनविरोधादिति तदयुक्तं विश्वप्रकाशमतं दूषयति वाक्यानार्जव-त्वात् पूर्वोत्तरशब्दाभ्यामुपात्तभागपरित्यागेनानुपात्तभागग्रहणस्या-युक्तत्वात् । यत्तूक्तं "चैत्रादर्वाङ्नाधिमास इति "घटकन्यागते सूर्य्ये इति वचनद्वयमाश्विनादीनां फाल्गुनान्तानां पूर्वभागा अधिमासा न भवन्तीत्येवंपरमिति तन्न। लक्षणाध्याहारादिप्रसङ्गात् "दशानां फाल्गु-नादीनामिति वचनविरोधस्यास्मत्पक्षेऽप्यभावाच्च स्वरूपतोऽधिमास-निषेधस्यानङ्गीकारात्। यत्त्वस्मत्पक्षे दूषणमभिहितं तदयुक्तं असंक्रान्त-मासनिषेधस्य सामान्यशास्त्रस्य विशेषशास्त्रेण बाधस्य युक्तत्वादस्य दोषस्य भवत्पक्षेऽपि समानत्वात् सामान्यशास्त्रप्राप्तोत्तरमासपूर्वार्द्ध-त्वापवादाङ्गीकारान्मासचयस्य दुष्टत्वप्रतिपादकवचनस्य ज्योतिःशास्त्र-प्रसिद्धविवाहादिशुभकर्मविषयत्वात्, तथाच तत्रैवोक्तं "विवाह-यज्ञोत्सवमङ्गलेष्वित्यादि, तस्मात्पूर्वैव व्याख्या न्यायसी ।

संक्रान्तिद्वयसंयुक्तः स मासोंऽहस्पतिः स्मृतः ।
चैत्रादिसप्तमासेषु न कदाचिद्भवेदयम् ॥
ऊर्जादिपञ्चमासेषु कदाचन भवेद्यदा ।
तदा द्वावधिकौ स्यातां तस्मिन्नर्जादिपञ्चके ॥

इति मलमासस्वरूपनिर्णयः ।

## अथ मलमासे कार्य्याकार्य्यनिर्णयः ।

तत्र शातातपः ।

वत्सरान्तर्गतः पापोयज्ञानां फलनाशकृत् ।
नैर्ऋत्य-यातुधानाद्यैः समाक्रान्तोऽधिमासकः ॥
मलिम्लुचैः समाक्रान्तिं सूर्य्यसंक्रान्तिवर्जिताम् ।
मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु ॥

सत्यव्रतः ।

मलिम्लुचस्तु यो मासः स मासः पापसंज्ञकः ।
वर्जितः पितृदेवानां सर्वकर्मसु तं त्यजेत् ॥

पैठीनसिः ।

श्रौत-स्मार्त्तक्रियाः सर्वा द्वादशे परिकीर्त्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फला इति संज्ञिताः ॥
तस्मात् त्रयोदशे मासि कुर्य्यात्ता न कथञ्चन ।
कुर्वन्ननर्थमेवाशु कुर्य्यादात्मविनाशनम् ॥

भृगुः ।

एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत् ।
हव्य-कव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः ॥ इति
भविष्योत्तरेऽपि ।

असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि ।
मलीमसमशौचं तु वर्जयेन्मतिमान्नरः ॥

सुमन्तुः ।

न कुर्य्यादधिके मासि काम्यं कर्म कदाचन ।
मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति ।

गृह्यपरिशिष्टेऽपि ।

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः ।
गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत् ॥

ब्रह्मसिद्धान्ते ।

यदा शशी याति गभस्तिमण्डलं
दिवाकरः संक्रमणं करोत्यनु ।
तदाधिमासः कथितो विरिञ्चिना
विवाह-यात्रोत्सव-यज्ञदोषकृत् ॥

ज्योतिःशास्त्रान्तरे ।

सवितृमण्डलमेति यदा शशी
तदनुसंक्रमणं कुरुते रविः ।
मलमहोत्सवनाशकरस्तदा
मुनिवरैः कथितोऽधिकमासकः ॥

तथा ।

सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
भानुना लङ्घितोमासो ह्यनर्हः सर्वकर्मसु ॥

एवं सामान्यतः सकलकर्मनिषेधप्राप्तौ विशेषो वक्ष्यते तत्र शङ्खः ।

न कुर्य्यादधिके मासे कर्माकर्म कथञ्चन ।
मुक्त्वा नैमित्तिकं कर्म तद्धि तत्रैव कीर्त्तितम् ॥

'कर्म्माकर्मेतिशब्देन काम्यकर्म्मोच्यते, तद्धि फलकामैः क्रियमाण-त्वात्कर्म, अफलकामैरक्रियमाणत्वादकर्म, कर्म च तदकर्म चेति कर्म-धारयः। तथैवाह प्रजापतिः।

न कुर्य्यादधिके मासि काम्यकर्म कदाचन।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितं॥

अत्र केचिदाहुः काम्यस्य कर्मणोऽधिमासे प्रारम्भः समाप्तिश्च निषिध्यते। आरब्धे तु काम्ये कर्मणि समाप्तिकालादर्वाक् मध्यपतितेऽधिमासेऽपि काम्यं कर्म कार्य्यं। तथा चातुर्मास्यव्रतानामाषाढेऽधिमासे नारम्भः कार्त्तिके चाधिमासे न समाप्तिः। अन्तरापतिते त्वधिमासेऽप्यनुष्ठानं। अतएवान्तराधिमासपातेऽपि संक्रान्तियुक्ताषाढशुक्लैकादश्यां चातुर्मास्यव्रतानामारम्भोऽभिहितः संक्रान्तियुक्तकार्त्तिकशुक्लैकादश्यां समाप्तिरुक्ता। यथोक्तम्।

एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य च।
आषाढादौ नरोभक्त्या चातुर्मास्यव्रतक्रियाम्॥
ततो विबुध्यते देवः शङ्ख-चक्र-गदाधरः।
कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः॥
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विजः।
अधिमासे च पतिते एष एव विधिक्रमः॥
अधिमासनिपातेऽपि क्रमादिन्द्राम्बिका-हरीन्।
कन्या-तुला-वृश्चिकेषु नृप उत्थापयेद् ध्रुवम्॥

न चैवं सति मासपञ्चकं व्रतानुष्ठानप्राप्तौ चातुर्मास्यव्रतमिति समाख्याविरोधः

वार्षिकांश्चतुरोमासान् मद्यं मांसं परित्यजेत् ।
स्वर्णदो हरिमुद्दिश्य स भवेद्वेदविद्द्विजः ॥
यः क्षिपेत् छक्रुपादेन आषाढादिचतुष्टयम् ।
विष्णुपूजनकर्मार्थः स भवेत्तन्निकेतनः ॥

मैत्रादिपादे स्वपितीह विष्णु-
र्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥

इत्यादिवचनविरोधश्चेति वाच्यं ।

षष्ठ्या तु दिवसैर्मासः कथितोवादरायणैः ।

इति वचनान्मासचतुष्टयोपपत्तेः ।

ब्रह्मसिद्धान्ते ।

प्रारब्धं कर्म यत्किञ्चिन्न तु कार्य्यं मलिम्लुचे ।
असूर्य्या नाम ये मासा न तेषु मम सम्मताः ।
व्रतानाञ्चैव यज्ञानामारम्भाश्च समाप्तयः ॥

इत्यारम्भ-समाप्त्योरेवाधिमासे प्रतिषिद्धत्वाच्च चकारात् सर्व-काम्यकर्मग्रहणमिति तदयुक्तम् ।

प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितं ।
आगते मलमासेऽपि तत्समाप्यमसंशयम् ॥

इति काठकगृह्यपरिशिष्टवचनेन काम्यकर्मसमाप्तेरपि मल-मासेऽपि विधानात्तस्मादेवं विषयव्यवस्था, "असूर्या नाम ये मासा इति वचनेन काम्यव्रत-यज्ञानां आरम्भः समाप्तिश्च प्रतिषिध्यते न तु

नित्यव्रत-यज्ञानां, "नित्य-नैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे" इत्यादिवक्ष्यमाणनित्य-नैमित्तिकविधायकबहुवचनसङ्कोचप्रसङ्गात् । तस्मादस्यैवैकस्य काम्यव्रत-यज्ञविषयतयासङ्कोचोयुक्तः । ननु किमत्र मलमासात् प्रागारब्धस्य समाप्तिः प्रतिषिध्यते, उताचैवारब्धस्य, न प्रथमः "प्रवृत्तं मलमासात् प्रागिति वचनविरोधात्, न द्वितीयः आरम्भनिषेधादेव च समाप्तेरप्रसक्तेर्निषेधायोगादिति । उच्यते । मलमासप्रारब्धस्यैव समाप्तिस्तत्र निषिध्यते यो ह्यज्ञानान्मलमासेऽपि काम्यं कर्म प्रारभते तेन तत्र समाप्तौ कृतायां दोषाधिक्यं स्यादित्येतदर्थमिदं वाक्यमिति न दोषः ।

वृद्धमनु-वृहस्पति-पैठीनसि-ज्योतिः-पराशराः ।
अग्न्याधेयं प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च ।
वेदव्रत-वृषोत्सर्ग-चूडाकरण-मेखलाः ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत् ॥

क्वचिद्यज्ञ-दान-प्रतिग्रहानिति पाठः ।

अस्यापवादः ।

चन्द्र-सूर्य्यग्रहे चैव मरणे पुत्त्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकमिति ॥
बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते ।
मलमास इवैतानि वर्ज्जयेद्देवदर्शनं ॥ इति

"अग्न्याधेयं प्रतिष्ठाञ्चेत्यावश्यकत्वे सतीति शेषोद्रष्टव्यः तेन मलमासेऽपि प्रायश्चित्तभूतमग्न्याधेयमग्न्यनुगत्यनन्तरं कर्त्तव्यं न प्रतिषिध्यते, एवं प्रतिमादिसंस्कारनाशे पुनः प्रतिष्ठा न प्रतिषिध्यते

यज्ञाः काम्या नित्या अपि वसन्तादिसम्बन्धेन विधीयमाना उत्तरे ससंक्रान्तेऽपि क्रियमाणा ये स्वकाले एव कृता भवन्ति, 'दानानि' महादानानि। केचिद्व्रतानामपि महतामेव प्रतिषेधमाहुः वृषोत्सर्गस्य च नैकादशाहिकस्य च प्रतिषेधः षोडशश्राद्धादिवत्तस्यापि प्रेतोपकारित्वाच्छुक्रास्तमयादावपि अनावश्यकत्वे सति अग्न्याधेयादि प्रतिषिध्यते "मलमास इवेत्यभिधानात् । 'देवदर्शनं' प्रसिद्धस्वयम्भूदेवतादर्शनं ।

तत्राच प्रथमं विवचितं, "अनादिदेवता दृष्टा न शुभं नष्टभार्गवे" इति स्कन्दपुराणवचनात् मलिम्लुचेऽप्यनावृत्ततीर्थस्नानं विवर्जयेत् ।

अत्र केचिदाहुः । मल इवेति सिद्धवद्दृष्टान्तीकरणान्यथानुपपत्त्या मलमासे प्रथमदेवतादर्शननिषेधः सिद्धः । अपरे तु "मलमासइवेत्यग्न्याधेयादिष्वेव योजयन्ति। यथा मलमासे चन्द्र-सूर्य्यग्रहादिकालव्यतिरेकेणैतेषां निषेधस्तथैव बाल्यादिष्वपि यथा स्यादिति, तस्मिन् पचे मलमासे देवतादर्शनस्य न प्रतिषेधः ।

वापी-कूप-तड़ागादिप्रतिष्ठां यज्ञकर्म च ।
न कुर्य्यान्मलमासे तु महादान-व्रतानि च ॥

महादानानि मत्स्यपुराणे दर्शितानि ।

मनुरुवाच ।

महादानानि यानीह पवित्राणि शुभानि च ।
रहस्यानि प्रदेयानि तानि मे कथयाच्युत ॥

मत्स्य उवाच ।

नोक्तानि यानि गुह्यानि महादानानि षोड़श ।
तानि ते सम्प्रवक्ष्यामि यथावदनुपूर्वशः ॥
आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं तद्वद्धारादानं तथैव च ॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वच्छोड़शः परिकीर्त्तितः ॥

कूर्मपुराणे त्वन्यान्यपि दश महादानानि दर्शितानि ।

कनकाश्व तिला नागा दासी-रथ-मही-गृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

काठकगृह्ये ।

चूड़ां मौञ्जीबन्धनञ्च अग्न्याधेयं महालयं ।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते ॥

कौथुमिः ।

अधिमासे न कर्त्तव्यं श्राद्धं सांवत्सरादिकम् ।
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिके न तु ॥

हारीतः ।

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।

तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥
सपिण्डीकरणादूर्द्ध्वं यत्किञ्चित् श्राद्धिकं भवेत् ।
दृष्टं वाप्यथ वा पूर्तं तन्न कुर्यात् मलिम्लुचे ॥

आभ्युदयिकं श्राद्धं आद्यवत्सरान्तर्गतजातकर्मादिनिमित्तव्यतिरिक्तं। अन्ये त्वेवं व्याचक्षते 'वत्सरात्प्रथमादृत इति प्रथमं वत्सरं विहाय आभ्युदयिकं श्राद्धं मलमासे न कर्त्तव्यं प्रथमे तु संवत्सरे मलमासे प्राप्ते सपिण्डीकरणं विहितं तदुत्तरदिने यदाभ्युदयिकं विहितं तन्मलमासेऽपि कर्त्तव्यं। यथोक्तं।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च।
सपिण्डकक्रियां कृत्वा कुर्य्यादाभ्युदयं ततः ॥

इत्यत्र वचने आभ्युदयशब्देन आभ्युदयिकं श्राद्धं विभागप्रकरणे विश्वरूपाचार्य्येण व्याख्यातं। अन्ये तु उत्तरशेषत्वेनैवं व्याचक्षते सपिण्डीकरणादूर्द्ध्वं यत्प्रथमे संवत्सरे प्रतिमासं पुनः क्रियमाणं त्रैपुरुषिकं मासिकं श्राद्धं तन्मलिम्लुचेऽधिमासे कार्य्यमिति वक्तुं 'वत्सरात्प्रथमादृत इत्युक्तं एतच्चोपरिष्टाद्वक्ष्यते। असंक्रान्तं प्रकृत्य ज्योतिःशास्त्रे।

तत्र दत्तमदत्तं स्याद्धुतं चाहुतमेव च ।
सुप्रजप्तमजप्तं स्यान्नोपवासः कृतोभवेत् ॥
न यात्रां न विवाहञ्च न च वास्तुनिवेशनम् ।
न प्रतिष्ठाञ्च देवानां प्रासाद-ग्राम-भूरुहाम् ।
न हिरण्यं सुवासांसि कारयेदिति निश्चयः ॥

पराशरः ।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

नारदीयपुराणे ।

अल्पायामथ राजेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥
त्रयोदश्यान्तु शुद्धायां पारणे पृथिवीफलं ।
सर्वयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं ॥
एतस्मात् कारणाद्विप्राः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तामल्पां दृष्ट्वैव द्वादशीं ॥
महाहानिकरा ह्येषा द्वादशी लङ्घिता नृणां ।
करोति धर्महरणं अस्नातेव सरस्वती ॥

कूर्म्मपुराणे ।

कलाद्वयं त्रयं वापि द्वादशीं न लतिक्रमेत् ।
अतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥

भविष्यत्पुराणे ।

यो द्वादशीमतिक्रम्य पारणं कुरुते नरः ।
द्वादशाब्दव्रतं तस्य तत्क्षणादेव नश्यति ॥

स्कन्दपुराणे ।

द्वादशीं यस्त्वतिक्रम्य त्रयोदश्यान्तु पारणम् ।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु ॥

देवीरहस्ये ।

द्वादशीं समतिक्रम्य पारणं यः करोति हि ।
स्नान-दानादिकं सर्व्वं निष्फलं तस्य जायते ॥

न च ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।

सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु ॥

इति देवलवचनात् द्वादश्यतिक्रमे न दोष इति शङ्कनीयम् । यत आह नारदपुराणे वशिष्ठः ।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति ।

यस्मिन् काले पारणं मरणं वा तत्र तात्कालिक्येव तिथिः न पुनः सा तिथिः सकला ज्ञेयेत्येतद्भवतीत्यर्थः । यत्र पुनस्त्रयोदश्यां पारणकालपर्य्याप्ता कियन्मात्रैव द्वादशी तत्र पद्मपुराणोक्तम् ।

त्रयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत् ।

सा तिथिः सकला चेति वशिष्ठः प्राह धर्म्मवित् ॥

स्कन्दपुराणे ।

कलाद्वयं त्रयं वापि द्वादश्याः समतिक्रमेत् ।

एकादशीमुपोषित्वा तत्र धर्म्मफलं व्रजेत् ॥

तथा ।

द्वादशीतिथिशेषः स्यात् परतस्त्र त्रयोदशी ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

एतदपि पारणपर्य्याप्तद्वादशीविषयं । एवं च यानि त्रयोदशी-पारणे निषेधपराणि द्वादशीपारणनियमविधिपराणि वा तानि सर्व्वाणि त्रयोदश्यां द्वादशीसम्भवविषयाणि ।

तथाच पद्मपुराणे ।

यदि किञ्चित् त्रयोदश्यां द्वादशी चोपलभ्यते ।

द्वादश्यां पारणे यत्र वर्ज्जयित्वा त्रयोदशीम् ॥

महाहानिकरा ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्म्महरणमस्नातेव सरस्वती ॥
अथवा द्वादशी न स्यात् स्वल्पापि रविसंयुता ।
पारितव्यं त्रयोदश्यां महापुण्यविवृद्धये ॥

अन्यासु गङ्गाद्यासु सरित्सूत्तीर्य्य परस्मिन् तीरे स्नातव्यं सरस्वत्यां तु प्रथमं स्नात्वा परं पारं गन्तव्यं, 'अस्नाता' स्नतं स्नानं यस्यां सा स्नाता क्तोऽधिकरणे, न स्नाता 'अस्नाता' सरस्वती लङ्घ्यमाना यथा धर्म्महरणं करोति एवं पारणलङ्घिता अतिक्रामिता द्वादशी धर्म्महरणं करोति ।

पुराणात् ।

एकादशी द्वादशी च तत्रोपोष्या स्नतं फलम् ।
मुहूर्त्तं द्वादशीं प्राप्य त्रयोदश्यां न पारणम् ॥

यानि पुनः ।

कलाकाष्ठामुहूर्त्तं तु यदि चेन्न परेऽहनि ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इति त्रयोदश्यां द्वादश्यसम्भवमनूद्य पारणनिषेधपराणि तानि ।

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणं ॥

इत्यादिभिः समानार्थानीत्यनवद्यं ।

अन्ये त्वेवं त्रयोदशीपारणनिन्दा-प्रशंसयोर्व्यवस्थामाहुः, गृहस्थानां त्रयोदशीपारणनिषेधः तस्यैव च द्वादशीफलहानिलक्षणो-निन्दार्थवादः, त्रयोदशीपारणन्तु यतीनां, तथाहि द्वादशीक्षये-

गृहिणां फलार्थिनां युज्यते, यतयस्तु फलनिरपेक्षाः कर्त्तव्यमिति कर्माचरन्ति । क्रतुशतप्राप्तिपुण्यलक्षणप्रशंसा यतीनामेव, न हि नानाविधानि क्रतुशतफलानि त्रयोदशीपारणाद्भवन्तीत्यर्थः प्रमाणं, तस्मात्प्रशंसामात्रमेतदिति । तदसत् तथाहि द्वादश द्वादशीन-घ्नन्ति गृहिणामित्यस्य कोऽर्थः, न खलु कृतं विना कर्मभोगेन क्षीयते, तेन द्वादश्यः स्वरूपेण फलतोवा नश्यन्तीति न सम्भवः किन्तु प्रत्यवायफलविभीषिकेयं । तथाहि न गिरा गिरेति ब्रूया-त्तदात्मानमेव तदुन्नातोद्गिरेदिति, न खलून्नाचात्मगिरणं प्रत्यक्षा-दिभिरुपलभ्यते, किन्तु गिरापदप्रयोगनिन्देयमिति स्थितं । तथा द्वादशीक्षयनिन्दा यति-गृहिणोर्यतेरपि हि नित्य-नैमित्तिक-काम्यानुष्ठानोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्रयोजनं तस्मात् द्वादशीक्षये सत्युपात्तदुरितक्षयाभावादकरणनिमित्तप्रत्यवा-यापत्तेः त्रयोदशीपारणमनुचितमेव यतीनां ।

तथाचाह ।

> नित्य-नैमित्तिकैरेव कुर्वाणोदुरितक्षयम् ।
> ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत् ।
> वैराग्यक्षेपविज्ञानात् कैवल्यं लभते नर इति ॥

यदप्युक्तं "विष्णुसायुज्यमृच्छतीति यतीनामेवोचितं न गृहि-णामिति । तदप्यसत् । गृहस्थस्यापि यथोचितकर्मानुष्ठानात् मोक्ष-श्रुतेस्तत्र गृहस्थ-मुमुक्षोः कर्माण्युपदिश्यन्ते, श्रूयते च "स एवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्त्तत इति ।

याज्ञवल्क्यश्च ।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते इति ॥

ऋतुशतपुण्यप्राप्तिलक्षणा च प्रशंसा यति-गृहिणोः साधारण्येव, तस्मात्तयोरेकादशीपारणविधिनिषेधयोरुक्तैव व्यवस्थाश्रयणीया । अथै-कादश्यादिधर्मसन्देहे सति येषां वचनमुपादेयं येषाञ्चानुपादेयं ते प्रदृश्यन्ते विष्णुरहस्ये ।

ब्रह्मोवाच ।

अर्चयन्ति सदा विष्णुं मनोवाक्कायकर्मभिः ।
तेषां हि वचनं ग्राह्यं ते हि विष्णुसमा मताः ॥

कूर्मपुराणे भगवानुवाच ।

संस्पृष्टा वैष्णवान् विप्रान् विष्णुशास्त्रविशारदान् ।
चीर्णव्रतान् सदाचारान् तदुक्तं यत्नतश्चरेत् ॥

स्कन्दपुराणे महेश्वर उवाच ।

ये पुराणानि जानन्ति सेतिहासानि तत्त्वतः ।
सदाचारपराः शान्तास्तेषां वचनमौषधम् ॥

पुलस्त्य-सत्यव्रतौ ।

धर्मेषु नियता ये च धर्मशास्त्रार्थचिन्तकाः ।
वेदशास्त्रविदो ये वै तेषां वचनमौषधम् ॥

भगवान् वेदव्यासः ।

वेदवेदार्थतत्त्वज्ञा धर्मशास्त्रार्थचिन्तकाः ।
सदाचारपरा ये वै तेषां वचनमौषधम् ॥

देवीपुराणे ।

ये च न्यायविदः शान्ता धर्मशास्त्रार्थवेदिनः।
स्वकर्मनिरता दान्तास्तेषां वचनमौषधम्॥

औषधमिवोपादेयमित्यर्थः।

आपस्तम्बः।

यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मो मानुषः स्मृतः।
आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्क्केणानुसन्धत्ते स धर्म्मं वेत्ति तत्त्वतः॥

तेन तद्वचनमुपादेयमित्यर्थः।

शारदापुराणे।

पुराण-न्याय-मीमांसा-धर्मशास्त्रार्थचिन्तकाः।
सदाचारपरा ये वै तदुक्तं यत्नतस्मरेत्॥

पद्मपुराणे।

सेतिहासपुराणज्ञाः स्मृतिसिद्धान्तवेदिनः।
वासुदेवप्रिया ये च तदुक्तं वैदिकं भवेत्॥

उक्तेभ्यश्च येऽन्ये तेषां वचनं वर्जनीयमित्यर्थः। सिद्धमुक्तञ्च विष्णुरहस्ये कूर्मपुराणे।

येषां न कारणं वेदा न विप्रा न जनार्द्दनः।
तन्त्राणि धर्मशास्त्राणि प्रमाणं कारणं मुने॥

स्कन्दपुराणे।

वेदाधिगमहीना ये शौचाचारविवर्जिताः।
नास्तिकाः पण्डितम्मन्यास्तेषां वाक्यं विवर्जयेत्॥
वैश्वदेवविहीना ये जप-यज्ञविवर्जिताः।

देवताविमुखा ये च तेषां वाक्यं विवर्जयेत् ॥

आदित्यपुराणे ।

देवताविमुखा ये च जप-होमविवर्जिताः ।
विष्णुभक्तिविहीनाश्च तेषां वाक्यं विवर्जयेत् ॥
येषामरण्यकं नास्ति रतिः स्वाध्याय एव च ।
परमे धाम्नि सूर्य्ये च तेषां वाक्यं विवर्जयेत् ॥

वैष्णवतन्त्रे ।

येषां गुरौ च जप्ये च विष्णौ च परमात्मनि ।
नास्ति भक्तिः सदा तेषां वचनं परिवर्जयेत् ॥

वायुपुराणे ।

नग्नानग्नाः स्मृता ये वै हैतुका वकवृत्तयः ।
देवतानिन्दका ये वै तेषां वाक्यं विवर्जयेत् ॥

कालिकापुराणे ।

वेदे च देवतायाश्च कर्मण्यपि च वैदिके ।
श्रद्धा नास्ति च येषां वै तेषां वाक्यं विवर्जयेत् ॥

पद्मपुराणे ।

वाचं व्याकुरुते नैव मीमांसां न तथाध्वरम् ।
शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत् ॥

स्कन्दपुराणे ।

येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते ।
न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये ॥

तथा ।

पञ्चाशन्तु पुराणानि येतिहासानि मानवाः।
ये विनिघ्नन्ति तेषां वै वचनं परिवर्जयेत्॥

तथाच योगयाज्ञवल्क्यः।

पुराणं पञ्चरात्रञ्च वेदाः पाशुपतं तथा।
अतिप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये एकादशीनिर्णयः षष्ठोऽध्यायः समाप्तः।

---

# अथ सप्तमोऽध्यायः ।

## द्वादशीनिर्णयप्रकरणम् ।

### अथ श्रवणद्वादशीनिर्णयः ।

विष्णुधर्मोत्तरे ।

श्रीराम उवाच ।

उपवासासमर्थानां किं स्यादेकमुपोषितम् ।
महाफलं महादेव तन्ममाचक्ष्व पृच्छतः ।

शङ्कर उवाच ।

या राम श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् ।

भविष्योत्तरे युधिष्ठिर उवाच ।

उपवासासमर्थानां सदैव पुरुषोत्तम ।
एषा या द्वादशी पुण्या तां वदस्व ममानघ ॥

श्रीकृष्ण उवाच ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
सर्वकामफला पुण्या उपवासे महाफला ॥
सङ्गमे सरितां स्नात्वा द्वादश्यां समुपोषितः ।
समग्रं समवाप्नोति द्वादशद्वादशीफलम् ॥

तथा ।

द्वादशी श्रवणोपेता यदा भवति भारत ।
सङ्गमे सरितां स्नात्वा गङ्गादिस्नानजं फलम् ।
सोपवासः समाप्नोति नाच कार्य्या विचारणा ॥

यमः ।

यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
नाम्ना तु सा महापुण्या द्वादशी विजया स्मृता ॥

विष्णुरहस्ये ।

श्रवणेन समायुक्ता मासि भाद्रपदे हि सा ।
द्वादशी सा महापुण्या नाम्ना तु विजया हि सा ॥
तस्यां स्नातो विधानेन सर्वतीर्थफलं लभेत् ।
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं दशाब्दिकम् ॥

स्कन्दपुराणे ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितां पुण्ये द्वादशीं तामुपोषितः ।
अप्लवादेव चाप्नोति द्वादशद्वादशीफलम् ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्तमहती तस्यां दत्तं भवति चाक्षयमिति ॥
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं दशाब्दिकम् ।
फलं दत्तहुतानाञ्च तस्यां लक्षगुणं भवेत् ॥

विष्णुधर्मोत्तरे ।

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ।
अत्यन्तमहती नाम द्वादशी सा प्रकीर्त्तिता ॥
स्नानं जप्यं तथा दानं होमश्राद्धं सुरार्चनम् ।
सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ॥
तस्मिन्दिने तथा स्नातो यत्र क्वचन सङ्गमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ॥
श्रवणे सङ्गमाः सर्वे परिपुष्टिप्रदाः सदाः ।
विशेषाद्द्वादशीयुक्ते व्रतयुक्ते विशेषतः ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अतीव महती तस्यां सर्वं दत्तमिहाक्षयम् ॥
श्रवणद्वादशीयोगे पूजयित्वा जनार्द्दनम् ।
दानं दत्त्वा च विप्रेभ्यः सोपवासो जितेन्द्रियः ॥
महानदीसङ्गमेषु प्रतिवर्षं युधिष्ठिरः ।
चकार विधिवद्दानं ततो दिष्टान्तमागतः ॥
अव्ययं परमं स्थानं दुर्लभं सर्वमानवैः ।
यत्र कामफला वृक्षाः नद्याः पायसकर्द्दमाः ।
सदैवामलपानीयाः पुष्करिण्योमनोरमाः ॥

तं देशमासाद्य वणिङ्महात्मा
सुमृष्टजाम्बूनदभूषिताङ्गः ।
कल्पं समग्रं सुरसुन्दरीभिः
सार्कं स रेमे मुदितः सदैव ॥

बुध-श्रवणसंयुक्ता द्वादशी सङ्गमोदकम् ।

दानं दध्योदनं शस्तं उपवासपरोविधिः ॥
सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना ।
एतैश्चान्यैश्च राजेन्द्र कामदा द्वादशी कृता ॥
या द्वादशी बुधयुतश्रवणेन सार्द्धं
सा वै जयेति कथिता मुनिभिर्नभस्थैः ।
तामादरेण समुपोष्य नरोहि सम्यक्
प्राप्नोति सिद्धिमणिमादिगुणोपपन्नाम् ॥

पौष्करे पद्मराचे च ।

सर्वकामप्रदे विष्णुर्बुध-श्रवणवासरे ।
द्वादश्यां प्रीणनीयः स्याच्चित्रगाधक्रमे क्वचित् ॥

तथाच श्रवणद्वादशीं प्रकृत्योक्तं नारदीयपुराणे विष्णुरहस्ये च ।

द्वादश्यामुपवासोऽच चयोदश्यां तु पारणम् ।
निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी ॥

तथाच मार्कण्डेयः ।

श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते ।
उपोष्य द्वादशीं तत्र चयोदश्यान्तु पारणम् ॥ इति ॥

इयञ्च द्वादशीश्रवणयोगमात्रेण कृत्स्नापि पुण्या भवति यथा रोहिणीयोगेनाष्टमी ।

तथाच मत्स्यपुराणे ।

द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः ।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ॥

केचिदेवं व्याचक्षते यदा कृत्स्ना श्रवणयुक्ता तदा पुण्या न तु तेन

युक्ता तावत्येव षष्टिनाड्यवस्थितैव पुण्या भवतीति । तद्युक्तं श्रवण-युक्ता सती कृत्स्ना पुण्या न तु यावती श्रवणयुक्ता तावत्येवेत्यर्थप्रतीतेः ।

एवं शङ्करगीतायाम् ।

कृत्तिकादिभरण्यन्ता तारावारविषन्नकम् ।
न ते संयोगमात्रेण पुनन्ति सकलां तिथिम् ॥ इति ॥

तेन यावत्काला तिथिर्नक्षत्रेण युज्यते तावत्येव पुण्येत्यवधार्य्यते, तेन श्रवणद्वादश्यामपि तथैव प्राप्नोति, तदर्थमिदमुक्तं "युक्तमात्रा नक्षत्रेण सकला पुण्यतमेति न तु यावती युक्ता तावत्येव प्रशस्यते" इति । श्रवणस्पृष्टेति पाठे तु स्पृष्टशब्दपर्य्यालोचनयैव च सा तथ्येन श्रवणयोगाक्षेपः स इति प्रतीयते । तथाच श्रवणद्वादशीं प्रकृत्योक्तं नारदीयपुराणे ।

तिथि-नक्षत्रयोर्योगो योगश्चैव नराधिप ।
द्विकलो यदि लभ्येत स ज्ञेयोष्टाष्टयामिकः ॥

तस्मादस्मदुक्तैव व्याख्या युक्ता ।

विष्णुपुराणे ।

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।
तास्वेव तद्व्रतं कुर्य्यात् श्रवणद्वादशीं विना ॥

अस्यार्थः । याः काश्चित्तिथयो येन केनचिन्नक्षत्रविशेषयोगेन पुण्याः प्रोक्तास्तासु यद्विहितं तत्तास्वेव कुर्यात् न तिथ्यन्तरे तन्नक्षत्रयुक्ते यथा फाल्गुनशुक्लपक्षद्वादशी पुष्यर्क्षेण युक्ता गोविन्दद्वादशी नाम तस्या-मुपवासव्रतं विहितं तत् तस्यामेव कुर्यान्न पुष्यान्वितायां एकादश्यां, सोऽयं श्रवणद्वादशीं विना नियमः । श्रवणद्वादशीव्रतन्तु श्रवणैका-दश्यामपि भवतीत्यर्थः ।

उक्तञ्च भविष्यत्पुराणे ।

श्रीकृष्ण उवाच ।

द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर ।
सर्व्वपापप्रशमनः सर्व्वसौख्यप्रदायकः ॥
एकादशी यदा च स्याच्छ्रवणेन समन्विता ।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥

नारदीयपुराणेऽपि ।

यदा न प्राप्यते ऋचं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥
उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः ।
विभेदोऽपि न कर्त्तव्यो विभेदात्पतते नरः ॥

अन्ये त्वेवं व्याचक्षते यास्तिथयो नक्षत्रयोगात्पुण्याः कथितास्तासु तद्व्रतं कुर्य्यादेव, श्रवणद्वादश्यान्तु न क्रियते व्रतमिति, नित्य-काम्यै-कादशीव्रता हि वैष्णवा भवन्ति, तत्रैकादश्युपवासानन्तरं द्वादश्युप-वासः कर्त्तुमशक्यः पारणान्तत्वाद्व्रतस्य, असमाप्ते व्रते चैककाले अन्यव्रतनिषेधात् ।

तदुक्तं विष्णुधर्म्मोत्तरे ।

पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनं ।
असमाप्ते व्रते पूर्व्वे कुर्य्यान्नैव व्रतान्तरमिति ॥

तेन वैष्णवाः केनापि कारणेन गृहीतैकादशीव्रतास्तेषां श्रवण-द्वादश्यां उपवासो न युज्यते "श्रवणद्वादशीं विनेति चोपलक्षणार्थं, तथाच प्रारब्धषष्ठी-सप्तमी-चतुर्दशीव्रतानां नक्षत्रयुक्तसप्त-पौर्णमास्यादि-

तिथिलाभे तद्व्रतोपवासानुष्ठानं नाप्तमेव पारणान्तं व्रतं ज्ञेयमित्यादेरुपपत्तिकलापस्यातुल्यत्वात्। यथा गृहीतोभयसप्तमीव्रतानां रोहिण्यष्टमीप्राप्तौ कथमुपवाससिद्धिरिति। तदयुक्तं । एवकारानाङ्गस्यात् उपलक्षणत्वस्यार्थेऽप्यर्थोपपत्तौ अन्याय्यत्वाच्च । तस्मात् पूर्व्वैव व्याख्या युक्ता । एकादशीयुक्ता श्रवणद्वादशी महापुण्या मत्स्यपुराणे ।

द्वादशी श्रवणास्पृष्टा स्पृशेदेकादशीं यदा ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभां ॥

'श्रवणास्पृष्टा' श्रवणेन युक्ता । श्रवणशब्दस्त्रिलिङ्गोऽप्यस्ति । "श्रवणास्पृष्टेति वदन् स्वल्पश्रवणयोगेनापि द्वादश्युपवासादियोग्या भवतीति गमयति । विष्णुधर्मोत्तरे ।

एकादशी द्वादशी च वैष्णव्यमपि तच्च चेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ॥
तस्मिन्नुपोष्य विधिवद्गच्छेच्छ्वेतपुरं ध्रुवं ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणं ।
निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी ॥

नारदीयपुराणे ।

संस्पृश्यैकादशीं राजन् द्वादशी यदि संस्पृशेत् ।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ॥

यस्तूपवासासमर्थः स्वीकृतैकादशीव्रतस्य तस्यैकादश्यामेवोपवासो द्वादश्यान्तु पूजामात्रविधिः "असमाप्ते पूर्वमित्युदाहृतवचनात् ।

तथाच मत्स्यपुराणे।

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिं॥

यमः।

श्रवणेन युता यत्र द्वादशी लभ्यते क्वचित्।
उपोष्यैकादशीं तत्र द्वादश्यामर्चयेद्धरिं॥

यस्तूपवासद्वयासमर्थः अङ्गीकृतैकादशीव्रतश्च स द्वादश्यामेवोपवसेत्।

तथाच नारदीयपुराणे।

उपोष्य द्वादशीं पुण्यां विष्णुनक्षत्रेण संयुतां।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयं॥
वाजपेये तथा यज्ञे कर्महीनोऽपि दीक्षितः।
सर्वं फलमवाप्नोति अस्नातोऽप्यकृतोऽपि सन्॥

अकृत इति बहुव्रीहिः।

एवमेकादशीं मुक्त्वा द्वादश्यां समुपोषणात्।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं॥

यस्तूपवासद्वयसमर्थस्तं प्रति भविष्योत्तरे दिनद्वयेऽप्युपोषणं विहितं।

एकादश्यामुपोष्यैवं द्वादश्यामप्युपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्द्दैवतं हरिरिति॥
असमाप्ते व्रते पूर्व्वे नैव कुर्याद्व्रतान्तरमिति।

निषेधात्समाप्तिश्च पारणेन विना नास्ति, तदभावे उपवासद्वये

इतो वचनेनैव विष्णुशृङ्खलयोगे त्वेकस्मादेवोपवासाच्छ्रवणद्वादशीव्रतकार्य्यमेकादशीव्रतकार्य्यं च प्रसङ्गात् सिध्यति । अत्र केचिदाहुः यदा तु भाविदिनशेषे रात्रौ वा श्रवणयोगस्तदा "प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकमिति सङ्कल्पयोगाभावादनुपोष्यैव सा तिथिरिति तदयुक्तं श्रवणयोगेन कृत्स्नतिथिपुण्यत्वाभिधानात् तेन यथातीतेनापि श्रवणयोगेन पुण्यता तथा भाविनापि श्रवणेन पुण्यता विद्यत एव, तथाच विष्णुशृङ्खलयोगेनास्यामेकादश्यान्तत्चणमेव दिवसपुण्यत्वात् नानाद्वादशीव्रतग्रहणसङ्कल्पः क्रियते । तथाच नक्षत्रोपवासे अस्तमयसम्बन्धिनो नक्षत्रस्योपोष्यत्वात् तस्य च प्रातरप्राप्तावपि व्रतग्रहणसङ्कल्पस्य पूर्णत्वात् प्रातरेव युक्तः । न च तत्रापि विप्रतिपत्तिः, सकलाहोरात्रपुण्यत्वाभिधानात् तस्मात् "मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते । अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेदित्यनेन न्यायेन श्रवणयोगमात्रेण द्वादश्यपि सकला लब्धविजयाभिधाना पुण्यवतामनुष्ठेयकर्मार्हेति ।

---

## अथ पारणकालनियमः ।

स्कन्दपुराणे ।

> तिथि-नक्षत्रनियमे तिथि-भान्ते च पारणम् ।
> अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् ॥

तथा ।

> याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः ।
> ऋक्षान्ते पारणं कुर्य्यात् विना श्रवणरोहिणीम् ॥

वह्निपुराणे ।

सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः ॥

नारदीयपुराणे ।

तिथि-नक्षत्रसंयोगे उपवासो भवेद्यदा ।
पारणन्तु न कर्त्तव्यं यावन्नैकस्य सङ्क्षयः ॥

इति श्रवणद्वादशीनिर्णयः ।

---

## अथ शिवरात्रिनिर्णयः ।

स्कन्दपुराणे ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्व्वविद्धैव कर्त्तव्या तिथि-भान्ते च पारणम् ॥
श्रावणी दुर्गनवमी तथा दूर्व्वाष्टमी च या ।
पूर्व्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ।
जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ॥

तत्र वृहस्पतिस्मृतिटीकाकृतः केचिदाहुः ।

यदि तावन्निषिद्धायास्त्रयोदशीयुक्तायाश्चतुर्दश्याः प्रतिप्रसवोऽयं ततः शुक्लपक्षचतुर्दशीविषयता स्यात्तस्या एव पूर्व्वविद्धाया निषिद्धत्वादितरत्र तु "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशीत्यादिना पूर्व्वविद्धाया एव ग्रहणात् । अथोपवासविषये अमावास्यायुक्तायास्तु-

दृश्या अपवादोऽयं तदसत् उपवासाश्रवणात् । शिवरात्रिशब्देनोच्यते इति चेत् । एवं तर्हि यत्र त्रयोदश्यामुपवासो विहितस्तत्चतुर्दश्यां जागरणन्तद्विषयं स्यात् । अथ शिवरात्रिशब्देन जागरणमभिधीयते चेत्तर्हि नेदमपवादकमुपवासाविधानात् ।

·भुक्त्वा जागरणे नक्ते चन्द्रार्घ्यर्थव्रते तथा ।
ततो व्रतेषु सर्वेषु रात्रियोगो विशिष्यते ॥

इति जागरणस्य पूर्वविद्धायामेव विधानादनर्थकमिदं वचनं तत्तुल्यार्थमिदमिति चेन्न, वचने शिवरात्रिपदस्याविवक्षितत्वप्रसङ्गात् । तस्माद्यत्र द्वितीयेऽहनि चतुर्दशी न विद्यते आदित्योदयसमये वा विद्यते तत्र पूर्वविद्धाया निषिद्धत्वादमावास्याग्रहणे प्राप्ते ।

जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ।

इत्युच्यते, यदा

मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ।
तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः ॥

अथ तदर्द्धविद्धाया एव तिथेर्ग्रहणे यत्र त्वधिकविद्धा भवति तत्र "उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेदिति भक्ष्यकल्पनायां प्राप्तायामिदमुच्यते "जयन्ती शिवरात्रिश्चेति । यदा तु दिनद्वयेऽपि चतुर्दशी विद्यते द्वितीयेऽहनि रात्रौ न विद्यते रात्रौ च जागरणं विहितं तदा

एकादशीमुपोषित्वा द्वादशीमप्युपोषयेत् ।
नैवात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥

इति न्यायेन समानदेवताकत्वेनामावास्यायामेव जागरणं कार्य्यं

यदृशत्वाद्यथैव हि ।

अष्टम्यां वा चतुर्दश्यां यः शिवं शंसितव्रतः ।

मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम् ॥

इति शिवव्रतं चतुर्दश्यां दृश्यते ।

तथा ।

पर्व्वणपूज्य देवेशं गुरुमग्निञ्च भक्तितः ।

अदत्त्वा च बलिं तत्र शिवस्याष्टशतं जपेत् ॥

इत्यमावास्यायां दृश्यत एव। अपि च शिवरात्रिशब्देन उपवास-शिवपूजा-जागरणान्यभिधीयन्ते, द्वे वा एकं वा आद्ये पक्षे उपवासस्य या विहिता सैवेतरयोरपि, द्वितीयपक्षे यद्युपवासव्यतिरिक्ते द्वे अभिधीयेते तर्ह्येकमवास्यायां भविष्यतीति द्वितीयैव स्यात्, तृतीयः पक्षस्तावदनुपपन्नः। यदि जागरणस्योत्पत्तौ शिवरात्रिशब्दवाच्यस्य कालविशिष्टस्य विधानं स्यात् ततोऽधिकारवाक्ये शिवरात्रिव्रतस्य फलसम्बन्ध उच्यमाने जागरणफलसम्बन्ध उक्तो भवति यथोत्पत्तिवाक्ये षणामपि यागानां कालसम्बन्धेऽवगते दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेतेति दर्श-पूर्णमासवाच्याः षड़ेव फले विधीयन्त इत्यवधारितं, एवमिहापि स्यात्। न च तथास्ति। यत्र तावत् प्रथमं दुर्वाससा व्याधं प्रति।

कृष्णपक्षे चतुर्दश्यां न किञ्चिन्मृगमण्वपि ।

प्राप्तवान् प्राणयात्रार्थं क्षुधासम्पीड़ितोऽवशः ॥

इत्युपक्रम्य ।

धनुः कोट्याहतान्येव विल्वपत्राणि मानद ।

पतितानि महाराज शम्भोः शिरसि भूमिप ॥
तस्थौ स एव तत्रैव सर्वरात्रमतन्द्रितः ।
स्वोदरार्थं महाराज मृगलिप्सुरहङ्कृतः ।
रात्रिशेषं स्थितो व्याधः स्तब्धदृष्टिरनामिकः ॥

इत्युपवास-शिवपूजा-जागरणानि प्रासङ्गिकानि तव जातानी-त्यभिधाय ।

प्रभाते विमले जाते दृष्ट्वा नत्वैव शङ्करम् ।
स्नात्वा सरसि राजेन्द्र पूजयित्वा महेश्वरम् ।
बिल्वपत्रैर्नृपश्रेष्ठ कन्दमूलैश्च पारितम् ॥

इत्येतावति कथिते केन विशेषेण भगवान् जागरणमेकफल-सम्बन्धं ब्रवीति । यदपीश्वरवचनं पार्वतीं प्रति व्रतनिरूपणे ।

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।

इत्युपक्रम्य ।

त्रयोदश्यां विशालाक्षि एकभक्तं समाचरेत् ।
उपोषितो वरारोहे चतुर्दश्यां वरानने ॥

इत्यादिग्रन्थसन्दर्भेण स्नापन-गन्ध-पुष्पादिभिरभ्यर्चनं पादादा-रभ्य सर्वाङ्गपूजामभिधाय गोमयमण्डलं दीपमालाभिर्वेष्टयित्वार्घ्य-प्रदानान्तम् ।

स वै शुद्ध्यति पापेन त्रिविधेन वरानने ।

इति प्राशस्त्यसहितमभिधाय "जागरं तत्र कर्त्तव्यं गीतवादित्र-मङ्गलैरिति जागरणमभिधाय "कर्त्तव्या यामपूजा च स्नानं पञ्चा-मृतेन त्वित्येवमन्तेन कृतं, यच्च प्राधान्येन कश्चिद्विशेषः, तस्मात्

प्राधान्यं सर्वेषां त्रयाणां द्वयोर्वा आद्यपक्षद्वये "मुख्यं वा पूर्वचोदना-ल्लोकवदिति न्यायेनोपवासदिन एव सर्वेषामनुष्ठानम् ।

तृतीयपक्षे तु "चतुर्दश्यां तु कीनाशसपर्य्या येन मे कृता । तथा जागरणं रात्रावित्यत्र जागरणस्यैव रात्रौ श्रवणात् । इतरस्य चतुर्दश्यामेव श्रवणात् । यदि परखण्डतिथौ चतुर्दश्यनुरोधेन दिवैव पूजा आरभ्यते तथापि दोषो नास्ति, अस्ति च पुराणा-न्तरे "यमपूजातो भिन्ना दिवापूजेति दिवैव सर्वस्याः पूजायाः प्रारम्भः । वस्तुतस्तु त्रयाणामेव प्राधान्यं इत्ययमेव पक्षः ।

मम भक्तोजनो देवि शिवरात्रिमुपोषकः ।
गणत्वं मोक्षदं दिव्यमक्षयं दिव्यशासनम् ।
सहत्वा तु बुभुजे भोगानमृतसम्भवानिति ॥

तथा ।

तुष्टोऽहं भवभक्तस्य शिवरात्रिमुपोषकः ।
वरं ददामि ते तुभ्यं देव-दानवदुर्लभम् ॥

इत्येवमादिबहुवचनानुसारादुपवासस्यापि प्राधान्यमेव तस्मा-त्त्रयाणामपि फलसम्बन्धित्वात् ।

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।

इतीह प्रधानानां व्रतशब्दवाच्यत्वात् व्रतस्य च चतुर्दश्यां विहित-त्वात् खण्डचतुर्दश्यास्तु पञ्चदशीयुक्ताया उपवासे ग्रहणादन्यत्र जया-न्विताया एव कृष्णचतुर्दश्या ग्रहणादिह च तदसम्भवादेकस्मिन्नेव दिने उपवास-पूजा-जागरणानाञ्च कर्त्तव्यत्वादवश्यमन्यतरकाल-बाधायामापतितायां पूजा-जागरणकालस्य पाश्चात्यस्य बाधा युक्ता ।

उपवासस्य च तयोः पूर्व्वमप्यनुष्ठेयत्वादनुपसंजातविरोधित्वात् स्वकाल एवानुष्ठानं युक्तं। अपि चोपवासस्याहोरात्रव्यापकस्य तन्मध्यगतकालैकदेशेऽनुष्ठीयमानयोः पूजा-जागरणयोस्तिथिविषये अप्रयोजकयोः प्राधान्याविशेषेऽपि बाध्यत्वमेव युक्तं नोपवासकालस्यान्यानन्तर्भूतत्वाद्यत्र तूपवासं विना जागरणं दृश्यते। यथा,

कश्चित् पुण्यविशेषेण विहीनोऽपि च यः पुमान्।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्॥ इति।

तत्र भवतु पूर्व्वविद्धाया ग्रहणं। उक्तञ्च "भुक्ता जागरणे नक्ते" इत्यादौ।

अन्ये तु न्यायसिद्धेऽप्यर्थे पुराणमेवं पठन्ति।

माघासिते भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्याः।
जयाप्रयुक्तां न तु जातु कुर्या-
च्छिवस्य रात्रिं प्रियकृच्छिवस्य॥ इति।

तदेतदपेशलं।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी।
अमावास्या तृतीया च ता उपोष्याः परान्विताः॥

इत्यादिभिर्वृद्धवशिष्ठादिवचनैरुपवासतिथिनिर्णयप्रस्तावदर्शितैरमावास्याविद्धायां चतुर्दश्यामुपवासो यथा विहितः तथा त्रयोदशीविद्धायामपि तस्यां।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित्।

उपवासेषु कालेषु एष धर्मः सनातनः ॥

इति निगमवचनेऽभिहितः, एवमविशेषे सति ।

जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ।

इत्येवमादिशागुदाहृतवचनवशाच्छिवरात्रिचतुर्दशी पूर्व्वविद्धा गृह्यते । अतएव शिवरात्रिव्रतस्य रात्रिप्राधान्यमुक्तं स्कन्दपुराणे ।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।

अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत् ॥

'निशि भ्रमन्ति' 'विचरन्ति'। 'शक्तयः' देव्यः। 'शूलभृत्' शङ्करः, यतोऽतस्तस्यां चतुर्दश्यां सत्यां तेषां भूत-शक्ति-शिवानां पूजनम् । नागरखण्डे ।

माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ।

अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ ॥

लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च ।

संक्रमिष्याम्यसन्दिग्धं वर्षपापविशुद्धये ॥

तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः ।

मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति ॥

तथा ।

माघ-फाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी ।

अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ॥

'अनङ्गः' त्रयोदशी । यत्तु वचनम् ।

माघासिते भूतदिनञ्च राज-

न्नुपैति योगं यदि पञ्चदश्याः ।

जयाप्रयुक्तां न तु जातु कुर्य्या-

च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥

'जया' त्रयोदशी, न तु यस्यां रात्रौ त्रयोदशीयुक्ता चतुर्दशी । तथा चास्मिन्नेव वचने जयायुक्तां रात्रिमिति प्रतीयते ।

तथाच पद्मपुराणे ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।

जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

अनेन त्रयोदशीसम्भिन्ना यदा चतुर्दशीरात्रिर्न भवति किन्तु दिनभुक्तिप्रमाणतः दिनपर्य्याप्ता तदा जागरोपवासादि कर्त्तव्यमित्युक्तं भवति । एवञ्च माघस्य कृष्णचतुर्दश्यां रात्रौ जयायोगस्य निषिद्धत्वात् ।

अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगो यदा भवेत् ।

पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

इति वचनं माघव्यतिरिक्तविषयमिति केचित् । शिवरात्रिव्रते माघमासव्यतिरिक्ते कृष्णचतुर्दश्यामप्युपवासविधानात् ।

"आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि च ।

गृह्णीयात् माघमासे वा द्वादशैवमुपोषयेदित्यादिना ।

दीपोत्सवेऽथवा माघकृष्णायान्तु चतुर्दशी ।

द्वादशस्वपि मासेषु प्रकुर्य्यादिह जागरम् ॥

इति सह्याद्रिखण्डवचनेन जागरणस्यापि विधानादिति । तदयुक्तं माघमासव्यतिरिक्तचतुर्दश्यामुपवासविधानेऽपि न सा शिवरात्रिशब्देनोच्यते शिवरात्रिशब्दस्य माघमासकृष्णचतुर्दश्यां रूढ़त्वात् ।

तथाच स्कन्दपुराणे।

माघ-फाल्गुनयोर्मध्ये असिता या चतुर्दशी।

शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा॥

तत्रैव ब्रह्मादिखण्डेऽपि।

माघ-फाल्गुनयोर्मध्ये कृष्णा या च चतुर्दशी।

दत्ते शिवफलं यस्मात् तेन सर्वसुरासुरैः।

शिवरात्रिरितिख्याता मत्कलैव पृथक्स्थिता॥

तथा।

माघमासस्य शेषे या प्रथमा फाल्गुनस्य च।

कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता॥

नागरखण्डेऽपि।

माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी।

तस्या रात्रिः समाख्याता शिवरात्रिसमुद्भवा।

तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः॥

तथाच तत्रैव माघमासे कृष्णचतुर्दशीं प्रकृत्योक्तं।

यानि कान्यत्र लिङ्गानि चलानि स्थावराणि च।

तेषु संक्रमते देवस्तस्यां रात्रौ यतो हरः।

शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभा॥

शिवरहस्ये।

तत्प्रभृत्यथ देवर्षे माघकृष्णचतुर्दशी।

शिवरात्रिरितिख्याता प्रियेयं त्रिपुरद्विषः॥

तस्मादत्रैवं विषयव्यवस्था। यदा दिनद्वयेऽपि प्रदोषव्यापिनी

प्रथमदिन एव वा त्रयोदशी च दिनपर्याप्ता तदा पूर्वैव चतुर्दशी "त्रयोदशी यदा देवीति वचनात् । यदा प्रथमदिन एव प्रदोष-व्यापिनी त्रयोदशी च दिनपर्याप्ता तदा पूर्वैव ।

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति वचनात् ।

ननु यदा द्वितीयदिन एव प्रदोषव्यापिनी तदा किं "अर्द्ध-रात्रात् पुरस्ताच्चेदिति वचनात् पूर्वा ग्राह्या, उत "प्रदोषव्या-पिनीति वचनादुत्तरेति कथं निर्णयः । उच्यते यद्यपि "अर्द्धरात्रात् पुरस्ताच्चेदितिवाक्यं द्वितीयदिने प्रदोषव्यापित्वाभावेऽप्युपपद्यते "प्रदोषव्यापिनीति वाक्यञ्चार्द्धरात्रादुपरि जयायोगेऽपि तथाप्येवंविधे विषये द्वितीयचतुर्दशीग्रहणे प्रागुदाहृतपूर्वविद्धशिवरात्रि—प्रति-पादक—बहुवाक्यसङ्कोचप्रसङ्गः, पूर्वशिवरात्रिग्रहणे तु तदभाव इति सैव ग्राह्या । किञ्च पूर्वा बहुकर्मकालव्यापिनी उत्तरा तु न तथेति सैव ग्राह्या । यदा तु दिनद्वये प्रदोषकाले चतुर्दश्यभावस्तदापि "अर्द्धरात्रात् पुरस्ताच्चेदिति वचनात् पूर्वैव । यत्तु माघासितवचनं तदेतद्वाक्यपर्यालोचनयार्द्धरात्रादुपरिजयायोगनिषेधकं । शिवरा-त्रिव्रतान्तर्भूतमाघमासव्यतिरिक्तकृष्णचतुर्दशीनिर्णयस्त्वेवं । "एका-दश्यष्टमी षष्ठीतिवचनादमावास्याविद्धा सा ग्राह्या "कृष्णपक्षेऽष्टमीति वचनात् त्रयोदशीविद्धा । एवं विरोधे सति रात्रौ यामचतुष्टये पूजाविधानाज्जागरणविधानाच्च तदनुसारेण बहुकर्मकालव्यापिनी ग्राह्या । यदा तु तत्कर्मकालव्याप्तितोविशेषस्तदा ।

रुद्रव्रतेषु सर्व्वेषु कर्त्तव्या संमुखी तिथिः ।
अन्येषु व्रतकल्पेषु पूर्व्वोद्दिष्टामुपावसेत् ॥

इति ब्रह्मवैवर्त्तवचनान्निर्णयः ।

अत्र केचिदाहुः ।

यदा पारणपर्य्याप्तामावास्या तदा पूर्व्वा नोचेत् परा ।
भूताष्टम्योर्दिवा भुक्का रात्रौ भुक्का तु पर्व्वणि ।
एकादश्यां दिवारात्रौ भुक्का चान्द्रायणञ्चरेत् ॥

इति भोजननिषेधात् ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

'दिनभुक्तिप्रमाणतः' दिवसभोजनानुरोधेन, यस्यां त्रयोदश्यां उपोषितायां तिथ्यन्ते विहितं पारणं रात्रौ नोपपद्यते सात्र त्रयोदशी दिनभुक्तिप्रमाणत इत्युच्यत इति । तदयुक्तं भुक्तिशब्दस्य भोजनवत्कालप्राप्तावपि तिथि-नक्षत्र-वारभुक्तिरित्यादिषु ज्योतिःशास्त्रे निरूढत्वात् । एवञ्च भुक्तिशब्देन भोजनग्रहणे "अर्द्धरात्रात् पुरस्ताच्चेदिति सङ्कोचप्रसङ्गः, कालव्याप्तिग्रहणे तु न सङ्कोच इति सैवात्र भुक्तिशब्देनोच्यते । किञ्च "त्रयोदशी यदा देवीतिवाक्यात् तिथ्यन्ते विहितं पारणं यदा दिन एव सम्भवति तदा पूर्व्वा ग्राह्येत्ययमर्थोन लक्षणादिक्लेशं विना लभ्यते । दिनशब्देन च सन्निहितत्रयोदशीसम्बद्धदिनपरित्यागेन भवत्पक्षे दिनान्तरं ग्राह्यं द्वितीयदिनभोजनप्रमाणत्रयोदशी यदा पूर्व्वदिने तदा निशि सम्पूर्णा चतुर्द्दशी ग्राह्येत्युक्ते च यदा त्रयोदशी घटिकादिपरिमितभो-

जनप्रमाणा तदैव चतुर्दशी पूर्वविद्धा कार्य्येति प्रसज्येत । ततश्च प्रागुदाहृतवाक्यविरोधः । अथैवमुच्यते यस्यां त्रयोदश्यां उपोषितायां दिवा भोजनं सम्भवति सा ग्राह्येति तदपि न सर्वस्यामपि त्रयोदश्यामुपोषितायान्दिवाभोजनसम्भवात् । अथ तिथ्यन्तविहितं भोजनं यदा दिवा सम्भवति तदा पूर्वा ग्राह्येति, तन्न लक्षणाप्रसङ्गात् रात्रिभोजनेऽपि बाधकाभावाच्च । निषेधस्य रागप्राप्तभोजनविषयत्वात् रागप्राप्तलाभे विधिस्पृष्टे निषेधाप्रवृत्तेर्विधिवैषम्यविकल्पादिप्रसङ्गात् अग्नीषोमीयहिंसादिवत् । उपपादितश्चैतत्तैलाभ्यङ्गादिकालनिर्णयप्रस्तावे । तस्मात् सकलदोषपरिहारार्थं भुक्तिशब्देन कालव्याप्तिरेवोच्यते न भोजनमिति सिद्धं । एवञ्च शिवरात्रौ सकलवचनपर्य्यालोचनया व्यवस्थायां काल्पनिकी बृहस्पतिस्मृतिटीकाकृतोक्ता व्यवस्था हेया । शिवपूजाजागरणकालबाधश्च विना कारणं प्रसज्येत । उपवासस्यापि पूर्वविद्धायामुपपादितत्वात् बहुतरवाक्यसङ्कोचप्रसङ्गाच्च । शिवरात्रिशब्देन चोपवास-पूजा-जागरणान्यभिधीयन्ते । त्रयाणामपि प्राधान्यप्रतीतेः ।

तथाच स्कन्दपुराणे ।

एवं द्वादश वर्षाणि शिवरात्रिमुपोषकः ।
यो मां जागरते रात्रिं मनुजः स्वर्गमारुहेत् ॥
शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्दशीं ।
मातुः पयोधररसं न पिवेत् स कदाचन ॥

नागरखण्डे ।

उपवासप्रभावेन बलादपि च जागरात् ।

शिवरात्रिं तथा तस्य लिङ्गस्यापि प्रपूजयेत् ।
ततो राज्यं समासाद्य पितृ-पैतामहं महत् ॥

नागरखण्डे ।

स्वयम्भूलिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादोगणताङ्गतः ॥

अन्यान्यपि व्रतानां प्राधान्यप्रतिपादकानि वचनानि प्रागुदाहृतानि ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
शिवरात्रिनिर्णयः समाप्तः ॥

---

# अथ पर्वसन्धिकालनिर्णयः ।

तत्र पर्व द्विधा पौर्णमासी अमावास्या चेति । तयोश्च स्वरूपं गोभिलेन दर्शितं ।

यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः सामावास्येति ।

स्मृत्यन्तरञ्च ।

यदा अस्तं गते सूर्य्ये चन्द्रमा अभ्युदियात् सा पौर्णमासीति ।

तत्र पूर्णिमानामनिर्वचनं ब्रह्माण्ड-मत्स्यपुराणयोः ।

यदीचेते व्यतीपाते दिवापूर्णे परस्परम् ।
चन्द्रादित्यौ पराह्ने तु पूर्णत्वात् पूर्णिमा स्मृता ॥

अमावास्यानिर्वचनं शतपथश्रुतौ ।

ते देवा अब्रुवन्नमा वै नोद्य वसुर्वसति यो नः प्रावात्सीदित्युपक्रम्यते देवा अब्रुवन्न वा इमसन्यत्सोमाद्धिनुयात् सोममेवास्मै संभरामेति । तस्मै सोमं समभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तमिमं लोकमागच्छति स य इहापश्चौषधीश्च प्रविशति स वै देवानां च स्वन्नं ह्येषां तद्यदेष एताꣳ रात्रिमिहामा वसति तस्मादमावास्या नामेति ।

अत्र प्रथमवाक्ये वृत्रवधानन्तरप्रोषितेन्द्रसमागमाद्देवानामुक्तौ वसुनेन्द्रेण अमासहनिवसादमावास्येति, द्वितीयवाक्ये तु वसोश्चन्द्र-

मसोऽस्यां रात्रावस्मिंल्लोके निवासादमावास्येति द्विधा निर्वचनं।

पद्मपुराणे।

अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः।
अच्छोदा नाम तेषान्तु मानसी कन्यका नदी॥
तमथामावसुन्नाम पितरं वीक्ष्य सङ्गता।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीड़नात्॥
योगाद्भ्रष्टा तु तेनासौ व्यभिचारेण भामिनी।
धरां न स्पृशति पूर्वं पपाताथ भुवस्तले॥
तिथावमावसुर्यस्यामिच्छाञ्चक्रे न तां प्रति।
धैर्येण तस्य सा लोके अमावास्येति विश्रुता।
पितॄणां वल्लभा यस्मादृत्तस्याक्षयकारिणी॥

परमसंयमिपितृगणाभिमतब्रह्मचर्य्याप्रच्युतिहेतुभूतामावसुधैर्य्य-निवर्हणप्रतीतमहिमत्वादमावास्येत्युच्यते इत्येतदितिहासतात्पर्य्यं।

स्कान्दे नागरखण्डे।

अमानाम रवेरश्मिः सहस्रप्रमुखः स्थितः।
यस्यास्य तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः।
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता॥

मत्स्य-वायु-ब्रह्माण्डपुराणेषु।

अमा वसेतां ऋक्षेषु यदा चन्द्र-दिवाकरौ।
एषा पञ्चदशीरात्रिरमावास्या ततस्तु सा॥

अमासह एकत्रेत्यर्थः।

स्कन्द-ब्रह्माण्डपुराणयोः।

अमा नाम रवेरश्मिश्चन्द्रलोके प्रतिष्ठितः ।
तस्मात्सोमो वसत्यस्याममावास्या ततः स्मृता ॥

मत्स्य-वायुपुराणयोः ।

आश्रित्यताममावास्यां पश्यतस्तु समागमौ ।
अन्योन्यं चन्द्र-सूर्य्यौ तौ तदा ते दर्श उच्यते ॥

भगवतीपुराणे ।

कलाः षोड़श सोमस्य शुक्ले वर्द्धयते रविः ।
अमृतेनामृतं कृष्णे पीयते विबुधैः क्रमात् ॥
कलामाद्यां पिवेदग्निर्द्वितीयां तपनः कलां ।
विश्वे देवास्तृतीयाञ्च चतुर्थीञ्च प्रजापतिः ॥
पञ्चमीं वरुणश्चापि षष्ठीं पिवति वासवः ।
सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीं ॥
नवमीं कृष्णपचस्य पिवतीन्दुः कलामपि ।
दशमीं मरुतश्चापि रुद्र एकादशीं कलां ॥
द्वादशीं पिवते कालः धनाध्यक्षः त्रयोदशीं ।
चतुर्दशीं पशुपतिः कलां पिवति नित्यशः ॥
ततः पञ्चदशीं चैव पिवन्ति पितरः कलां ।
कलावशिष्टोनिष्पीतः प्रविष्टः सूर्य्यमण्डलं ॥
अमायां विशते यस्मादमावास्या ततः स्मृता ।
पूर्वाह्णे प्रविशत्यर्कं मध्याह्ने च वनस्पतिं ॥
अपराह्णे विशत्यप्सु स्वां योनिं वारिसम्भवः ।
अमां प्रविष्टः सोमस्तु शेषया कलयैकया ॥

तृण-गुल्म-लता-वृक्षान् निष्पादयति चौषधीः ।
तमोषधिस्थितं गावश्चरन्त्यापः पिबन्ति च ॥
तदङ्गानुगतं गोभ्यः क्षीरत्वमुपगच्छति ।
तत्क्षीरमश्नतीभूत्वा मन्त्रपूतं द्विजातयः ।
स्वाहाकार-वषट्कारैर्जुह्वत्याऊतयः क्रमात् ॥
हुतमग्निषु सोमाय पुनः सोमं विवर्द्धयेत् ।
एवं संक्षीयते सोमः क्षीणश्चाप्यायते पुनः ॥

ते च पूर्णमास्यमावास्ये द्विविधे पुराणात् ।

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधा त्विति ॥

अत्रानुमतिः सिनीवाली च चतुर्दशीमिश्रे, राका कुहूश्च प्रतिपन्मिश्रे ।

तथाच काठकश्रुतिः ।

या पौर्णमासी सानुमतिः, योत्तरा सा राका, या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति ॥

वृद्धवसिष्ठः ।

राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः ।
राका सम्पूर्णचन्द्रा स्यात्कलोनानुमतिः स्मृता ।
रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता ॥

भगवतीपुराणे ।

यदा त्वस्तमियात्सूर्य्यः पूर्णश्चेन्दुरुपागमत् ।
युगपत्सोत्तरा राका तदा भवति पूर्णिमा ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥
अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥

वृद्धवशिष्ठः ।

दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।
तामेव च कुहूमाहुर्नष्टचन्द्रां महर्षयः ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

सिनीवालीप्रमाणस्तु क्षीणशेषो निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ॥

'सिनी' सिता अवसितेति यावत्, अल्पो बालः 'बाली', सिनी चासौ बाली चेति सिनीवाली। 'सिनीवालीप्रमाणः' बालाग्रमात्र-इत्यर्थः ।

कुहूरिति कोकिलेनोक्ते यावान्कालः समाप्यते ।
तत्कालसंज्ञिता ह्येषा अमावास्या कुहूः स्मृता ॥
तथान्यौ यावनुमत्या द्वौ लवौ काल उच्यते ।
लवौ द्वावेव राकाया ज्ञेयः कालोऽपराह्णिकः ॥

तथा ।

द्वौ लवौ अमावास्यायाः स कालः पर्वसन्धिषु ।
द्व्यक्षरस्तु कुहूमात्रः पर्वकालस्य स स्मृतः ॥

तथा ।

अनुमती च राका च सिनीवाली कुहूस्तथा ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ।
इत्येष पर्वसन्धीनां कालो वै द्विलवः स्मृतः ॥

भगवतीपुराणे ।

अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ॥

तत्र सन्धौ यजेतेति सन्धौ यागः कर्त्तव्य इति ।

तस्य चातिसूक्ष्मत्वेन कर्मानुष्ठानायोग्यत्वात् सन्धिशब्दः स्वार्थ-सन्निहितकर्मानुष्ठानयोग्यं पूर्वापरं कालं लक्षयति ।

ननु सन्धिमभियजेतेत्यभिशब्दस्योपरीत्यर्थः प्रतिपदि कर्त्तव्यत्वात् सन्धेरुपरि यागकर्त्तव्यताप्रतीतेः सन्धिपूर्वकाले यागो न प्राप्नोति । नैष दोषः निपातानामनेकार्थत्वात् प्रत्यासन्नं सन्धिमभिलक्ष्य यजेतेति वाक्यार्थः, अन्यथा प्रतिपदमभियजेतेत्यत्राप्युपर्य्यर्थग्रहापत्तेः, प्रतिपदि व्यतीतायां तत उपरि द्वितीयायां यष्टव्यमिति प्रसज्येत । तस्मात् पूर्वापरभाविनि काले सन्धौ यजेतेति श्रुतिर्यागं विधत्ते, अतएव श्रुत्यन्तरं "सन्धिमभितो यजेतेति ।

तथाह बौधायनः ।

सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्व्वेणाथ परेण वा ॥

ततश्च सन्धिसन्निहित एव काले साङ्गस्य कर्मणोऽनुष्ठाने प्राप्ते व्यवस्थापार्हद्वये नियममाह श्रुतिः ।"पूर्व्वेद्युरिध्माबर्हिः करोति अग्निमे वारभ्य गृहीत्वोपवसति । तथा "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति ।

तदप्यहर्द्वयं प्रतिपत्पर्वसवंधीत्याह गोभिलः ।

पचान्ता उपवस्तव्याः पचादयोऽभियष्टव्या इति ॥

'पचान्ताः' पञ्चदश्यः, तास्वग्न्यन्वाधानादि कर्त्तव्यं, 'पचादयः' प्रतिपदः ।

निगमः ।

उपेत्यान्तं यजेदादिं पचयोः पचचिन्तक इति ।

प्राङः लौगाचीयाः ।

आदिस्वान्तस्य पचाणां यज्ञिया इति ।

कात्यायनः ।

पचादौ यद्दाच इति[१] ।

भरद्वाजः ।

पचाद्या यष्टव्या भवन्तीति ।

आपस्तम्बेनापि ।

अमावास्यायां दीचा यजनीये वा पौर्णमास्यां यजनीये वा सौत्यमहः ।

इति पौर्णमास्यमावास्योपरितनदिनस्य प्रतिपद्रूपस्य यजनीयत्वमुक्तं ।

लौगाचिणाच विशेषो दर्शितः ।

चीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।

द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणीति ॥

---

(१) पचादौ यद्दिचरतीति क० ।

23-3

'औपवस्तस्य' उपवासस्याग्न्यन्वाधानादेस्त्रीनंशान् विदुः । यागस्य चतुरोऽंशान् विदुः । 'अन्त्यावंशौ' पञ्चदशी-प्रतिपत्सम्बन्धी, तौ 'उत्सृजेत्' परित्यजेत् । अन्त्यमंशं पञ्चदश्या व्रतकर्मणि, यागे च प्रतिपदश्चतुर्थमंशं । अपरे तु "द्वावंशावुत्सृजेदन्याविति पाठमुदाहृत्य व्याचक्षते । आद्यः पादः पञ्चदश्या उपवस्ते अन्वाधानादौ परिहर्त्तव्यः, पश्चादेश्चान्त्यः पादो यागे परिहरणीय इति । एतच्च सम्पूर्णपञ्चदशीव्यतिरिक्तविषयं, तस्याः प्रथमपादएवान्वाधानानुष्ठानात् । अन्ये तस्मिन्नेव पाठे प्रथमातिक्रमे कारणाभावादन्त्यः पादः पञ्चदश्याः व्रतकर्मणि परिहरणीय इति व्याचक्षते । एतच्च सद्यस्कालपौर्णमासीव्यतिरिक्तविषयं, तस्याः पर्वचतुर्थांश एव तदनुष्ठानात् । कथं तर्हि यागे चतुर इत्यपेक्षिते यज्ञपार्श्वः ।

पञ्चदश्याः परः पादः पश्चादेः प्रथमास्त्रयः ।
कालः पर्वणि यागे स्यादन्यथा तु न विद्यते ॥

कात्यायनः ।

न यष्टव्यं चतुर्थेऽंशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥

तथा ।

प्रतिपदंशास्त्रयोभूतः पादस्सैकस्य तिष्ठति ।
यातयामः स विज्ञेयो न हि भस्मनि हूयते ॥

न च पर्वचतुर्थांशादिके स्मार्त्ते यागकाले गृह्यमाणे सन्धौ यजेतेति श्रुतिविरोधः, सन्धेरतिसूक्ष्मत्वेन तत्र साङ्गप्रयोगानुपपत्तेः सन्धिश्रुत्यपेक्षितसन्धिसमीपावधिविषयत्वात् स्मृतेः । न च यावति

काले यष्टुं शक्यते तावान्कालः सन्धिविधिसामर्थ्यादेव सिद्ध इति किमवधिविधानान्तरेणेति वाच्यं। सामर्थ्यानुसारेण व्यवस्थायां कस्य-चिद्दूष्याद्यभावात् पञ्चमीपर्य्यन्तप्रयोगं समापयितुं अशक्नुवतः पञ्चमी-पर्य्यन्तं कालावधिर्जात इति कालातिक्रमानैमित्तपथिकृद्वैश्वानरादी-नामप्राप्तिः स्यात् । नच यः शीघ्रं समापयितुं शक्तस्तदीयसामर्थ्यं सामीप्यावधिपरिच्छेदकं अतोऽन्यैरपि तत्र यष्टव्यमिति अत ऊर्द्ध्व-मुत्कर्षे प्रागुक्तं कर्म्मेति वाच्यं। कश्चिन्मुहूर्त्तत्रयेण समापयितुं शक्त इति मुहूर्त्तचतुष्टयेन समापयतः कालातिक्रमो जात इति पथिकृदादिप्राप्तिप्रसङ्गात्तत्सामर्थ्यस्याव्यवस्थितपरिमाणत्वाच्च सा-मीप्यावधिपरिच्छेदकत्वमिति स्मार्त्तमेव वचनमवधिपरिच्छेदकं । अतएव बौधायनेनोक्तं "न खलु सन्धिः सूपपाद्यतीति। किञ्च स्वयं विशेषाक्षेपसमर्थोऽपि विधिर्दुर्बलप्रमाणप्रापितं विशेषं स्वीक-रोति यथा "अक्ताः शर्करा उपदधातीति वाक्यशेषोपस्थापितं घृतं यथा च "पशुना यजेतेति मन्त्रवर्णप्रापितं च्छागं तथा "सन्धौ यजे-तेति श्रुति-स्मृतिवाक्यप्रापितं पर्वचतुर्थांशत्वादिकं सन्धिपरिच्छेदकं स्वीकरोति । तस्मात्पर्वचतुर्थांशादिकाले यष्टव्यं तेन "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायामावास्यया यजेतेति श्रुतिद्वय-युक्तसन्धिपरमिति केचित् । अपरे तु पर्वचतुर्थांशत्वेन व्याचक्षते। तत्राप्यहनि यागः कर्त्तव्यः "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्द्देवतां यजेतेत्यहर्विधानात् । तथाच संकर्षणसूत्रं "अहनि वा तच्चाख्यात-मिति। तत्रापि पूर्वाह्ण एव "पूर्वाह्णो वै देवानामिति श्रुतेः । तत्रापि प्रातरेव "पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । याग-

कालः स विज्ञेयः प्रातर्होममनीषिभिः” ॥ इति वृद्धशातातपवचनात् “प्रातर्यजध्वमश्विनाविति मन्त्रलिङ्गाच्च । तथा “अङ्गिरसोमास्य यज्ञस्य प्रातरनुवाकैरवन्त्विति च । “न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यादिति प्रातःकालस्य यागसम्बन्धावगमाच्च । तथा कात्यायनेनापि “सद्यो वा प्रातरिति सद्यस्कालः कथितः । तथाच श्रुत्यन्तरेणापि “तत्र यजेत यत्रैनं पश्चादस्तमितं पुरस्तादादित्योऽभ्युदेतीत्यादित्योदयकाले यजेतेत्यवगम्यते । “उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमतीत्युदयानन्तरमेव यागानुष्ठानमापस्तम्बेनोक्तं । यत्तु प्रागुदयादमावस्यायास्तन्त्रकरणमुक्तं “प्रागुदयादमावास्यायामिति, तदुदयात्प्रागुपक्रममात्रमेव न लिप्सिरेव, “प्रागुदयादनुष्ठानेष्वित्यर्थविधानविरोधात् ।

अत्र गोभिलः ।

त्रयः पौर्णमासीकाला भवन्ति सन्ध्या वास्तमितोदिता वोच्चैर्वा सन्ध्योदिते चन्द्रे सन्ध्यास्तमिते रवौ चन्द्रोदये उत्तरा प्राग्व्यस्तमयादुच्चैरुदेति तामुपवसेत् ।

तथा ।

सन्ध्यापौर्णमासीमुपवसेद्वा उत्तरानित्येके ।

स्मृत्यन्तरं च ।

पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणः ।

उपावसेदिति शेषः ।

कात्यायनः ।

पूर्वां पौर्णमासीमुत्तरां चोपवसेत् ।

तत्र दिवा पर्वसन्धौ पूर्व्वेद्युरुपवासस्तदहर्यागः। रात्रिपर्वसन्धौ तदहरुपवासः परेद्युर्यागः।

तथाच बौधायनः।

अथोदाहरत्यूर्द्ध्वमर्द्धरात्रात्पौर्णमास्यां चन्द्रमाः पूर्य्यते स एतं चापररात्रं पूर्णो भवति सर्वं चाहरुत्तरस्या रात्रेरा मध्यरात्रादमावास्याया औपवसथ्येहन्यूर्द्ध्वं मध्यन्दिनाच्चन्द्रमसादित्यो रभते स एतं वापराह्णमथो भवति सर्वां चैतामुत्तरस्याह्न आ मध्यन्दिनादेतं सन्धिमभियजेतेति।

अस्यार्थः। 'अथोदाहरति' श्रुतिमिति शेषः। 'पौर्णमास्यामिति विषयनिर्देशः, 'ऊर्द्ध्वमर्द्धरात्राच्चन्द्रमाः पूर्य्यते' पौर्णमासी प्रवर्त्तत इत्युक्तं भवति। 'स एतमपररात्रं', अनन्तरञ्च 'सर्वमहः', 'उत्तरस्या रात्रेरा मध्यरात्रात्', अनुवर्त्तते, ततो विच्छिद्यते, सोऽयं रात्रिसन्धिरुक्तः, अथामावास्याविषये 'औपवसथीयेहनि यागदिनात्पूर्व्वेद्युः, 'ऊर्ध्वं मध्यन्दिनाच्चन्द्रमसादित्यो रभते' अमावास्या प्रवर्त्तते, 'स एतमपराह्णं', अनन्तरं सर्वां रात्रिं, 'उत्तरस्याह्नः', 'आ मध्यन्दिनात्', अनुवर्त्तते, ततः प्रतिपद्भवति, स एष दिवासन्धिरुक्तः। एतं सन्धिमभिव्याप्य सन्धेः पूर्व्वेद्युरग्नीनन्वाधायोत्तरेद्युर्यजेत। तथा एवं दिवासन्धिमभिलक्ष्य तदहः प्रातर्यजेतेति।

एवं श्रुतिमुदाहृत्य तद्गतौ मध्यरात्र-मध्यन्दिनशब्दौ व्याख्यातुमाह,

रात्रिर्हि पौर्णमास्यां सन्ध्ये या भवत्यहरमावास्यायामिति।

तेन श्रुतिगतौ मध्यरात्र-मध्यन्दिनशब्दौ रात्रिसन्धि-दिवासन्ध्योरुपलक्षकौ विवक्षिताविति प्रतिपादितं भवति।

अनयोश्च पौर्णमास्यमावास्याविषयश्रुत्योः प्रदर्शनार्थत्वं वक्तुं उत्तरसूत्रं ।

द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तरामेमावास्यामिति ।

अयमर्थः रात्रिसन्धि-दिवासन्धिमत्यौ द्वे पौर्णमास्यौ, दिवासन्धि-रात्रिसन्धिमत्यौ च द्वे अमावास्ये, तत्र दिवासन्धिः पूर्वामावास्या पौर्णमासी वा, रात्रिसन्धिस्तूत्तरा । अत्र पूर्वामावास्योक्ता न तु पौर्णमासी तामुपमाव्याजेनाह, 'पूर्वां पूर्वां पौर्णमासीमिति । अयमर्थः पूर्वाममावास्यामिव पूर्वां पौर्णमासीं जानीयादिति । ततश्च दिवासन्धिमत्यां पौर्णमास्यां यागः पूर्वेद्युरुपवास इति सिद्धं । तथा उत्तरा पौर्णमास्युक्ता न त्वमावास्या । तां पौर्णमासीं निरूपयन्नाह, 'उत्तरामुत्तराममावास्यामिति उत्तरां पौर्णमासीयुक्तामिवोत्तराममावास्यां जानीयादिति । ततश्च रात्रिगतममावास्या-प्रतिपत्सन्धिमुपवास-यागयोर्मध्ये कुर्य्यादित्यर्थः ।

आपस्तम्बस्त्वाह,

यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् श्वः पूरितेति वा, खर्विकां तृतीयां वाजसनेयिनः समामनन्ति । यदहर्न दृश्येत तदहरमावास्या श्वो न द्रष्टार इति वेति ।

तत्र खर्विकासूत्रार्थं उपरिष्टाद्वक्ष्यते । 'यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्', 'यदहर्न दृश्येत' इति सूत्रद्वयस्यायमर्थः । सर्व्वदा तावत् राका-कुह्वोरेव चन्द्रमसः पूर्णत्वमदर्शनं चेति ज्योतिःशास्त्रप्रसिद्धं । यस्मिन् पुरस्ताच्चन्द्रमाः पूर्णः 'उत्सर्पेत्' उदियात्, 'न दृश्येत वा',

तत्र यद्यपराह्णे रात्रौ वा पर्वसन्धिस्तदा तां पौर्णमासीं अमावास्यां चोपवसेदिति, यदा तु पूर्वाह्णे मध्यन्दिने वा पर्वसन्धिस्तदा यस्मिन्नहनि चन्द्रमाः 'पूरिता' पूर्णीभवति, यस्य वा तद्द्रष्टारोनेक्षितारो-भवेयुः तामनुमतीं सिनीवालीं चोपवसेदिति। "श्वःपूरिता" "श्वो न द्रष्टार इति वेति सूत्रद्वयस्यायमर्थः। उक्तञ्च भाष्यार्थसंग्रहकारेण।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
उपोष्या तत्र राका स्यात्सा पूर्णात्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्यानुमतिस्तत्र सा श्वःपूरितलक्षणा॥
अपराह्णे क्षपायां वा पर्वसन्धिर्भवेत् यदि।
उपोष्या तु कुहूस्तत्र यदहर्नेति लक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने पर्वसन्धिर्भवेद्यदा।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणेति॥

तदुक्तं निबन्धिभिः।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या पूर्ण उत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
पूर्वेद्युस्तत्र चोपोष्या सा श्वःपूरितलक्षणा॥
अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या यदहर्नेतिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा॥

गृह्यकारिकापि ।

पञ्चदशी प्रतिपच्च समेते एकदिने यदि तस्मिन्पञ्चदशी प्रकृतेरुपवासः पञ्चदशीह तनुर्यदि याग इति ।

तथा संकर्षणकाण्डे गोविन्दोपाध्यायेनोक्तं ।

यस्मिन्नहनि मध्यन्दिने पूर्वं एव विक्रम-सन्निपातौ तत्र पूर्वेद्यु-रुपवासः "श्वः पूरितेति वा, "श्वो न द्रष्टार इत्यस्य विषयः । यत्राप-राह्णे रात्रौ वा विक्रम-सन्निपातौ तत्र तदहरुपवासः "यदहः पुरस्ता-च्चन्द्रमा पूर्ण उत्सर्पेत्", "यदहर्न दृश्येतेत्यस्य विषय इति ।

देवस्वामिनाप्युक्तं ।

यदि पूर्वाह्णे पर्वसन्धिः समाप्येत ततो नितरामेव च शोभनं, यदि पुनरपराह्णे रात्रौ वा तदहरुपोष्य श्वोभूते याग इति ।

तथाच लौगाक्षिः ।

पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

अत्र केचित् सन्ध्यायां पर्वसन्धौ व्यवस्थापकवचनान्तराभावात् प्रायेण तत्रापि रात्रिशब्दप्रयोगाच्च सापि रात्रिशब्देन गृह्यत इत्याहुः। तदयुक्तं। सन्ध्या-रात्र्योर्भेदात्लक्षणायाश्च कारणाभावात्, सन्ध्यायां पर्वसन्धौ च पूर्वेद्युर्यागस्य "आवर्त्तते यदा सन्धिरित्यनेनैव सिद्धेः। एतेन "स वै सम्प्रत्येवोपवसेत" "स वा उत्तरामेवोपवसेत्" इति श्रुतिद्वयञ्च व्याख्यातं ।

शुक्लपक्षे तिथिर्ज्ञेया यस्यामभ्युदियाद्रविः ।
कृष्णपक्षे तिथिर्ज्ञेया यस्यामस्तमियाद्रविः ॥

इत्यादीनि पक्षव्यवस्थया यानि वचनानि तानि तिथ्यन्तरविषयाणि । यत्तु "पूर्वः पूर्वो यजमानोऽवतीयानिति वाक्यं तच्छास्त्रचोदिते काले प्राप्ते यावद्यावत् पूर्वं यजते तावत्प्रशस्तमिति प्रतिपादयत्तत्रैव काले विलम्बं निवारयति न पुनस्तोदितकालानादरेण पूर्वदिनं प्रशस्तमिति । तथाच सति चतुर्दश्यादिष्वपि तिथिषु यावद्यावदधस्तनतिथौ यागः क्रियते तावत्तावत्सुतरां प्रशस्तमित्यापद्यते। तस्मात्पूर्वाह्णादिपर्वसन्धिभेदेन व्यवस्था युक्ता ।

अत्र केचिदाहुः पूर्वापराह्ण-मध्याह्नास्त्रेधाविभागाश्रयणेन पञ्च पञ्च मुहूर्त्तात्मका अत्र वेदितव्या इति । ननु त्रेधा विभागपक्षे मध्यन्दिनान्त्यघटिकायां पर्वसन्धौ प्रातःकाले पर्वचतुर्थांशाभावात्तृतीये भागे यागः प्राप्नोति । तत्र "पर्वणो यस्तुर्थांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातरुक्तोमनीषिभिः" इत्येतद्विरुध्यते । तदसत् । कथं प्रातःकाले पर्वचतुर्थांशाभावः, प्रातःकालस्य त्रिमुहूर्त्तमात्रत्वादिति चेत् कुतः, "रेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु । प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चमः" ॥ इति वचनादिति चेत् । न । तस्य पञ्चधा विभागपक्षाश्रयत्वात् । अत्र तु पूर्वाह्णपरिमित एव प्रातःकालः यतो मीमांसाभाष्यकारोदाहृतायां श्रुतौ "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति मध्याह्नप्राक्तनः सर्वोऽपि प्रातःकालः प्रतीयते। यदि मध्या-

ह्नात् प्राक् प्रातःकालादूर्ध्वं कालान्तरं स्यात् ततः प्रातर्मध्याह्ना-स्तमयकालेषु ऋग्यजुःसामवेदैरागमने सूर्यस्य कालान्तरे वेदशून्य-स्यागमनं स्यात्। तच्च "वेदैरशून्यस्त्रिभिरेति सूर्य इति विरुध्यते। शाखान्तरे "ऋग्भिः पूर्वाह्न इति पाठान्तरात् प्रातःपूर्वाह्णयोरैक्याव-गमः, अतएव प्रथमं प्रहरमभिधायाहुः स्मार्त्ताः। "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इत्येवमपि पूर्वाह्णाङ्गिनश्चेत्प्रातःकालः तर्हि तत्रोपक्रम्य पूर्वाह्णे यागः। यदप्याहुः। "प्रातर्दैवमिति प्रोक्तं तन्नो-पपद्यत इति च।

तदप्युपक्रमाभिप्रायेणैव। पूर्वाह्णैकदेशश्चेत्प्रातःकालः तर्हि पूर्वाह्णविव-क्षया वचनद्वयेऽपि प्रातर्ग्रहणं, अन्यथा "पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां अपराह्णः पितृणामिति श्रुतिविरोधः।

पक्षादावेव कुर्वन्ति सदा पक्षादिकं चरुं।
पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः॥

इति कात्यायनादिवचनात्। अथ यत् प्रातरनुदिते जुहोती-त्यत्रापि दर्शनात्।

षष्ठेऽध्याये जैमिनिना "उदगयनपूर्वपक्षपुण्याहेषु दैवानि स्मृतिरूपा-ण्यन्यार्थदर्शनादित्युक्ते भाष्यकारेणान्यार्थसन्दर्शनं "पूर्वाह्णो वै देवा-नामिति दर्शितं।

आह च कर्कोपाध्यायः, "पूर्वाह्णे दर्शयाग इति। अनेन "प्रातरु-ह्णोममनीषिभिरित्यादि व्याख्यातं। तेनेष्टिविषये त्रेधा विभाग इति सिद्धमिति। तदयुक्तं। अत्र हि पूर्वाह्णापराह्णौ द्विधा विभक्तस्याहुः पूर्वापरभागौ विवक्षितौ। "आवर्त्तनात्तु पूर्वाह्णोऽप्यपराह्णस्ततः परः।

मध्याह्नस्तु तयोः सन्धिर्यदावर्त्तनमुच्यते"। इति वचनात्। न तु पूर्वा-ह्णादिशब्दानां त्रेधा विभक्तस्याह्नः क्रमेण भागत्रयपरत्वं। "आवर्त्तने यदा सन्धिस्ततः पूर्वमथापि वा। तदहर्याग इष्येत परतश्चेत्परेऽहनि" इत्यादिवचनात् वक्ष्यमाणबहुवचनविरोधप्रसङ्गाच्च। किञ्चान्यस्मिन् पक्षे मध्याह्नस्यावर्त्तनादुपरि घटिकापञ्चकपर्य्यन्तत्वात् तत्र सन्धौ तदहरेव यागः प्रसज्येत। न च प्रसज्यतामिति वाच्यं। तत्र प्रातः पर्वचतुर्थांशादिविहितकालासम्भवेन "पर्वणोयश्चतुर्थांश इत्यादिवच-नविरोधात् प्रातःकालस्य त्रिमुहूर्त्तत्वात्।

तथाच व्यासः।

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गव इति।

पराशरोऽपि।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्ते गते रवौ।

प्रातः स्मृतस्तथसौ कालोभागश्चाह्नः स पञ्चमः इति॥

पद्मपुराणेऽपि।

रेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु।

प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चमः॥

स्कन्दपुराणे प्रभासखण्डे।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तस्थिते रवौ।

प्रातःकाल इति प्रोक्तो भागश्चाह्नः स पञ्चमः॥

एवमन्येष्वपि प्रातःशब्दार्थप्रतिपादकेषु वाक्येषु त्रिमुहूर्त्तात्मकः प्रातःकालः कथितः, न तु त्रिधा विभक्तस्याह्नः पूर्वो भागः प्रातःकाल इति क्वचिदपि श्रूयते। यस्तु श्रुतौ प्रयोगः स न मुख्यः अनेकार्थत्वस्यान्या-

ध्यत्वात्। सनाडिकाः प्रातःकाल इति प्रोक्तं स्थापनारोपणादिष्विति सोऽप्येवमेव। ननु सार्द्धप्रहरः प्रातःकालः "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इति वचनात्। 'सः' प्रहरः, अधिक उपरि अर्द्धसंयुक्तः सार्द्धप्रहरः। ततश्च मध्यन्दिनान्त्यघटिकायां पर्वसन्धौ पञ्चसु घटिकास्वतीतासु प्रातःकालः पर्वचतुर्थांशश्च सम्भवतीति तदानीं साङ्गो-याग: करिष्यते। तदयुक्तं। "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः" इति आपस्तम्बवचनात्। त्रिमुहूर्त्तात्मकः प्रातःकालो यदा पर्वचतुर्थांशसम्भवस्तदैतद्वचनं भविष्यतीति चेत्। न। सङ्कोचे कारणाभावात्। न चादित्ये उदिते पौर्णमास्यास्तन्त्रप्रक्रमः आदित्योदयात् प्रागमावास्यायास्तन्त्रप्रक्रम इत्यस्तु पञ्चघटिकास्वतीतासु करिष्यत इति वाच्यं। अङ्गप्रधानवत्यां भावनायां युगपत्पुरुषं प्रवर्त्तयता प्रयोगवचनेन मध्ये विलम्बनिषेधात्। तस्माद्वचनद्वयपर्य्यालोचनया त्रिमुहूर्त्तात्मके सार्द्धप्रहरात्मके च प्रातःकालेऽवगम्यमानेप्यापस्तम्बवचनानुरोधात् त्रिमुहूर्त्तात्मक एव ग्राह्यः, तस्मादस्मिन् काले यागसिद्ध्यर्थं अस्मदुक्त एव विभाग आश्रयणीयः। ननु द्वेधाविभागे यत्रावर्त्तनादुपरि घटिकामात्र एव सन्धिस्तत्रोत्तरेद्युरेव यागइति तत्रापि कालासम्भवाद्वचनविरोधस्तुल्य एव। मैवं। पर्वणो-यश्चतुर्थांश इत्यादिकालस्य यागान्वयावगतेर्भवितव्यं, तदेतद्यागस्य कालान्वयेनेत्यभ्युपगन्तव्यं, पर्वमात्रोत्तरेद्युर्यागे क्रियमाणे न यागस्य कालान्वय इति पूर्व्वेद्युरेव याग इत्यविरोधः। नन्वेवं तर्ह्यपराह्न-सन्धावुत्तरेद्युर्यागविधानं विरुध्येत। मैवं। यत्रापराह्णे पर्वसन्धावुत्तरेद्युः प्रतिपच्चतुर्थांशे यागो न भवति तथाभूतस्यैवापराह्णस्यात्र ग्रहण-

मित्यविरोधः, युक्तञ्चैतत्, अन्यथा हेमन्तकाले अतिखर्वं तदहस्तत्र किञ्चिदूने चतुर्दशघटिकामात्रे आवर्त्तनं भवति तदा तत्रैव तिथिवृद्धौ कदाचित्षोडशनाडिकोऽपि चतुर्थांशो भवति तत्रावर्त्तनादुपरि घटिकामात्रसन्धावुत्तरेद्युरेव यागः प्रसज्येत। न च तद्युक्तं, तत्र विहितकालसम्भवात् "न यष्टव्यमिति निषेधात् पूर्व्वेद्युःसम्भवाच्च। अतोऽत्रापराह्णशब्दसङ्कोच एव ज्यायान्, "आ सप्तमान्मुहूर्त्ताद्वै दैवं कार्य्यं प्रशस्यत इति वचनं प्रातःकालविधानात्तद्व्यतिरिक्तविषयं भवताप्येतदङ्गीकार्य्यं अन्यथा त्रिधा विभक्तस्याह्नस्तृतीये भागे प्रातरात्मके भवता यागाङ्गत्वेन स्वीकृतेऽतीतेऽपि यागप्रसङ्गात्। तस्मात् द्वेधा विभक्तस्याह्नः पूर्व्वापरभागावेव पूर्व्वाह्णापराह्णावत्र गृहीतव्यौ, तत्रापराह्णादिगते पर्वसन्धौ परेद्युर्यागः पूर्व्वाह्णगते पर्वसन्धौ तदहर्यागः। यदा तु पूर्व्वापराह्णयोः सन्धौ पर्वसन्धिस्तदा तदहरेव यागइति प्रतिपादनार्थं मध्याह्नग्रहणं। मध्याह्नशब्दो हि पारिभाषिकं मध्याह्नमुत्सृज्याह्नो मध्यमं क्षणमेवात्र प्रतिपादयति। अत एव शातातपोऽपि मध्यमशब्दमेव पठति।

पूर्व्वाह्णे मध्यमे वापि यदि पर्व समाप्यते।
तदोपवासः पुर्व्वेद्युस्तदहर्याग इष्यते॥

यत्तु "पूर्व्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरन्तथा। आ तृतीयादपराह्णः सायाह्नस्य ततः परं"॥ इति गोभिलवचनाच्चतुर्धा विभागः, यश्च "मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः। मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः। सायाह्नः त्रिमुहूर्त्तस्तु सर्वधर्मबहिःष्कृतः"॥ इति व्यासवचनात्पञ्चधाविभागः सोऽप्युक्तरीत्या त्रिधाविभागवत् कर्मान्तर-

